भाति । वृत्रस्येत्यनेन मन्त्रेणाङ्क्ते अक्षिणी । रोचिष्णुरसीत्यनेन मन्त्रेणात्मानमादर्शे प्रेक्षते । छत्रं प्रतिगृह्णाति बृहस्पतेश्छदिरसि० इत्यनेन मन्त्रेण । प्रतिष्ठेस्थो विश्वतोमापातमित्युपानहौ प्रतिमुञ्चते युगपत् शक्यत्वाद् द्विवचनान्तत्वाच्च मन्त्रस्य । विश्वाभ्यो मेति वैणवं दण्डमादत्ते । दन्तप्रक्षालनादीनि नित्यमपि मन्त्रवन्ति भवन्तीति सूत्रशेषः । वासश्छत्रोपानहश्चापूर्वाणि चेन्मन्त्रः । वासआदिषु नवेष्वेव मन्त्रो भवति ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

जयरामः ॥ वेदमधीत्य स्नायादिति ब्रह्मचर्यं वेति वर्षं विकल्पः । द्वादशके व्रते एके स्नानमिच्छन्ति । गुरुणाऽनुज्ञातः सर्वत्र स्नायादित्यनुवर्त्तते । गुर्वनुज्ञा च कर्मान्तरं नतु स्नानकालान्तरमेतत् । वेदशब्देन किन्तदाह । विधिर्विधेयस्तर्कश्च वेद इति । विधिर्विधायकं ब्राह्मणम् विधेया मन्त्राः । तर्क्यते ह्यनेन सन्दिग्धोऽर्थ इति तर्कोऽर्थवादः । यथा अक्ताः शर्करा उपदधाति तेजो वै घृतमिति । अञ्जनं च तैलवसादिना च सम्भवति । तत्र तेजो वै घृतमिति घृतसंस्तवात्तर्क्यते घृताक्ता इति तेन विध्यर्थवादमन्त्रा वेद इत्युक्तम् । षडङ्गं शिक्षा कल्पो व्याकरणं निरुक्तञ्छन्दो ज्योतिषमिति । षड्भिरङ्गैरुपेतं वेदमधीत्य स्नायादित्येके । स्नानञ्च द्वितीयाश्रमप्रतिपत्तिः । तदनुष्ठानयोग्यता च षडङ्गे वेदेऽधिगते भवति । अत एवोच्यते न कल्पमात्र इति । नच कल्पमात्रे ग्रन्थमात्रेऽधिगते स्नानार्हो भवति । तस्माद्ग्रन्थतोऽर्थतश्चाधिगम्य स्नायात् । काममिच्छया । यज्ञं वेदेति याज्ञिकस्तस्येच्छया स्नानम्भवति । षडङ्गमर्थतोऽनधिगम्यापि । किङ्कृत्वा उपसङ्गृह्य गुरुम् । गुरोः पादोपग्रहणङ्कृत्वा । समिधोऽभ्याधायाग्निपरिचरणङ्कृत्वा इतश्च पूर्वं वेदाहुतिहोमः । एतदेव व्रतादेशनविसर्गेष्वित्युक्तत्वात् । ननु समिदाधानस्य पश्चाद्वेदाहुतयः कुतो न भवन्ति क्रमान्तरानभिधानात् । उपसङ्गृह्य गुरुँसमिधोऽभ्याधायेति पाठानुग्रहापत्तेश्च । मैवम् । यतो वेदाहुतीनां पश्चादेव समिदाधानन्ततश्च स्नानमिति । स यामुपयन्समिधमादधाति सा प्रायणीया याँ स्नास्यन्त्सोदयनीयेति श्रुतेः । तस्मात्समिदाधानस्नानयोरव्यवहितकालत्वोपपादनाद्वेदाहुतीनाञ्च स्नानाङ्गत्वातिदेशाच्च समिदाधानात्पूर्वं वेदाहुतिहोम इत्युक्तम् । स्नानञ्चाष्टभिरुदकुम्भैः । क्रमेण परिश्रितस्य वस्त्रादिना परिवेष्टितसमावर्तनस्थानस्थितस्याग्नेरुत्तरपार्श्वे स्थापितानामष्टानामुदकुम्भानामुदक्संस्थानाम्पुरस्तात्पूर्वस्यान्दिशि आस्तीर्णेषु कुशेषु स्थित्वा प्रथमा-

दुदकमादाय गृहीत्वा आत्मानमभिषिञ्चत इत्यग्निमेणान्वयः । अष्टाभ्य उदकुम्भेभ्योऽपाङ्ग्रहणे एक एव मन्त्रो येऽप्स्वन्तरग्नय इति । अभिषेचने तु भिद्यते । तत्र ग्रहणमन्त्रव्याख्या । तत्र येऽप्स्वन्तरित्यस्य प्रजापतिरग्निर्गायत्री आपो जलादाने० । हे अग्नयः ये भवन्त इह एतेषु उदकुम्भेषु वर्तमाने जले प्रविष्टाः । कथम् । अन्तः मध्ये कारणत्वेनेत्यर्थः । अग्नेराप इति श्रुतेः । तत्र ये गोह्यादयो विमङ्गलाः अतितान्सृजामि । अतिसृजनम्प्रक्षेपः विजहामीत्यर्थः । यश्च रोचनः सुमङ्गलस्तमनेन जलेन सह गृह्णामि । मङ्गलायोपपादयामि । के तेऽग्नयस्तानाह । गृह्णाति संवृणोति प्राणिजालमिति गोह्यः । उपगोह्योऽङ्गतापनः । मयून् विकृतमुखान् कृत्वा स्यति अन्तन्नयतीति मयूषः । मनस उत्साहं हन्तीति मनोहा । अस्खलः अप्रतीकार्यः । विरुजः विविधतया रुजति पीडयतीति विरुजः । तनूः शरीरावयवान् दूषयति विकृतान्करोतीति तनूदूषिः । इन्द्रियाणि हन्तीतीन्द्रियहा । एतानष्टौ विहायैकं रोचनं गृह्णामीति वाक्यार्थः । तथाच वृद्धमनुः । गोह्यादयोऽग्नयो ह्यष्टावमेध्यास्त्वशुभावहाः । शुभकृद्रोचनस्त्वेको मेध्यो दीप्तिकरः पर इति । अथाभिषेकमन्त्रव्याख्या । तेनमामिति द्वयोः प्रजापतिर्यजुरापोऽभिषेके० । तेन अभीष्टेन जलेनाहं मन्त्रलिङ्गात् आत्मानमभिषिञ्चामि । प्रयोजनमाह । श्रियै धर्मादिवृद्ध्यै । यशसे कीर्त्यै । ब्रह्मणे वेदार्थम् । ब्रह्मवर्चसाय यागाध्यापनोत्कर्षजतेजसे । पुनर्येऽप्स्वन्तरिति द्वितीयादुदकुम्भादपो गृहीत्वा येन श्रियमितिमन्त्रेणाभिषिञ्चते । अस्यार्थः । हे अश्विनौ येन जलप्रभावेण भवन्तौ सुराणां श्रियं सम्पदं शोभां वा अकृणुताम् कृतवन्तौ श्रियास्तोयत उत्पन्नत्वात् । येन च सुरामघृतम् अवमृशताम् प्राप्तवन्तौ । अटोऽदर्शनश्छान्दसम् । येन जलेनाक्ष्यौ उपमन्योरक्षिणी अभ्यषिञ्चताम् अभिषिक्तवन्तौ । वां युवयोर्यद्दैवम्भूतं यशस्तत् एतज्जलाभिषेकेण ममाप्यस्त्विति शेषः । साकाङ्क्षत्वात् । तृतीयादित्रयात् आपोहिष्ठादित्र्यृचेन यथाक्रममभिषेकः । इतरैस्त्रिभिरुदकुम्भजलैस्तूष्णीमभिषेकः । उदुत्तममिति मन्त्रेण मेखलामुन्मुच्य ऊर्ध्वङ्कण्ठदेशेनावतार्य दण्डन्निधाय भूमौ स्थापयित्वा । अनेनावसरप्राप्तन्दण्डाजिनयोर्निधानं लक्ष्यते तूष्णीम् । वस्त्रान्तरन्धृत्वा सूर्यमुपतिष्ठते । अथोपस्थानमन्त्रव्याख्या । उद्यन्निितिमन्त्रत्रयस्य प्रजापतिः शक्करी सविता उपस्थाने० । हे सूर्य यतो भवान् प्रातःसवने यावभिर्गमनशीलैर्ऋष्यादिसकलगणैश्च सन्निस्सेविता सेवितो वाऽस्थात्तिष्ठति तद्वत् । किम्भूतः । उद्यन् उद्गच्छन् । भ्राजभृष्टिः स्वप्रभयाऽन्यतेजोह्रासकः । आविदन् सर्वं शुभाशुभं जानन् । किञ्च यया च

त्वम्प्रातःसवने दशसनिः दशसङ्ख्यातानां गवादीनां सनिर्दाताऽसि। षणु दाने। अतो मामपि दशसनिन्दशगुणदक्षिणादिदातारङ्कुरु । मा माम् वेदनं सर्वज्ञत्वञ्च गमय प्रापय। एवमुत्तरत्रापि व्याख्येयम् । एवं स्तुत्वा दधितिलयोरन्यतरस्याश्य जटालोमनखानि च संहृत्य अपनीय औदुम्बरेण काष्ठेन दन्तान्धावेत शोधयेत् अन्नाद्यायेति मन्त्रेण । अस्यार्थः । तत्राथर्वणोऽनुष्टुप् वनस्पतिर्दन्तधावने० । हे दन्ताः यूयम् अन्नाद्याय अन्नादनाय व्यूहध्वम् आत्मशुद्धयर्थमेकपङ्क्तिनिविष्टा भवत । यतोऽयं राजा सोमश्चन्द्रः काष्ठरूपेणागमत् आगतः स एव सोमो मे मम मुखम्प्रमार्क्ष्यते शोधयिष्यति । केन यशसा सत्कीर्त्या भगेन षड्विधैश्वर्येणेति दन्तधावनस्य नित्यकामत्वादुभयफलसम्बन्धः । उत्साद्य अङ्गोद्वर्तनेन मलमपसार्य पुनःस्नात्वा मलस्नानङ्कृत्वा अनुलेपनमुपगृह्णीते आदत्ते प्राणापानौ मे इतिमन्त्रेण । अस्यार्थः । तत्र प्रजापतिर्यजुः प्राणापानौ चन्दनानुलेपे० । भो उपलेपनाधिदैवते मे मम प्राणापानौ वायू तर्पय प्रीणय। तथा मे चक्षुः चक्षुरिन्द्रियम् तथा मे श्रोत्रं श्रवणेन्द्रियञ्च तर्पय। पितरः शुन्धध्वमित्येतेन मन्त्रेण पादयोरवनेजनं क्षालनोदकम् दक्षिणाग्रहणात्प्राचीनावीती भूत्वा दद्यात् । शुन्धध्वं शोधनं दक्षिणापदं लुप्तसप्तम्यन्तम् तेन दक्षिणस्यान्दिशि निषिच्य क्षिप्त्वा चन्दनेनात्मानमनुलिप्य जपेत् सुचक्षाअहमिति मन्त्रम् । अस्यार्थः । तत्र प्रजापतिर्यजुः सविता नेत्राभिमन्त्रणे० । हे सवितः अहमक्षिभ्यां नेत्राभ्याङ्कृत्वा सुचक्षाः सुदर्शनो भूयासम् । तथा मुखेन सुवर्चाः सुतेजाः भूयासमिति पूर्वत्र सम्बन्धः । तथा कर्णाभ्यां सुश्रुत् सुश्रवणो भूयासम् भवेयम् । अहतन्नवीनम् सदशम् अनुपहतं वा तत्रापि अमौत्रेण मौत्री रजकस्तद्व्यतिरिक्तेन धौतं वा आच्छादयीत परिदधीत । परिधास्या इति मन्त्रेण । अस्यार्थः तदादिद्वयोराथर्वणो यजुर्लिङ्गोक्ता वासःपरिधाने० । हेवासोदेवते परिधास्यै अनेकशुभवस्त्रपरिधानाय तथा यशोधास्यै कीर्त्याधानाय तथा दीर्घायुत्वाय निर्दुष्टजीवनाय च इदं वासः संव्ययिष्ये परिधास्ये । किम्भूतः वासोदेवतानुग्रहेण जरदष्टिः आयुःपरिपाकवान् । पुरूचीः पुरुभिर्बहुभिः पुत्रधनादिभिरूचः संयोगोऽस्ति यस्य सः । ऊच समवाये । किम्भूतं वासः रायस्पोषम् रायो धनादिसमृद्धेः पोषं पोषणम्पुष्टिकरमित्यर्थः । किञ्चैतत्सम्बन्धेनाहं शतं शरदो वर्षाणि जीवामि। अथोत्तरीयं वास आच्छादयतीत्यनुषङ्गः । यशसामेति मन्त्रेण । अस्यार्थः । हे वासोदेवते द्यावापृथिवी द्यावाभूमी यशसा युक्तौ मा मामविन्दत् विंदताम्प्राप्नुतामिति

यावत् । विद्लृलाभे धातुः । विभक्तिवचनव्यत्ययेनान्वयः । तथा इन्द्राबृहस्पती अपि यशसा युक्तौ । मां अविन्दत् । तथा भगः सूर्योऽपि यशसा युक्तो मामविन्दत् । तच्चैतैः सम्पादितं यशो मा माम्प्रतिपद्यताम् मयि सर्वदा तिष्ठत्वित्यर्थः । यद्वा तद्यशो माप्रतिपद्यताम् । प्रतिरत्रापार्थः मत्तो मा ऽपयात्वित्यर्थः । एकञ्चेत्तत्रापि परिधानमन्त्रम्पठित्वा वस्त्रार्द्धम्परिधाय द्विराचम्य उत्तरार्द्धङ्गृहीत्वा उत्तरीयमन्त्रम्पठित्वोत्तरीयङ्कृत्वा पुनर्द्विराचामेदित्यर्थः । एतन्मन्त्रद्वयं स्वकर्तृकपरिधाने बोद्धव्यम् । परकर्तृके तु परिधापने येनेन्द्रायेति मन्त्रान्तरमित्यविरोधः । सुमनसः पुष्पाणि या आहरदिति मन्त्रेण । अस्यार्थः । तत्र द्वयोर्भरद्वाजोऽनुष्टुप् सुमनसो देवता क्रमेण पुष्पादानबन्धनयोर्वि० । याः सुमनसः पुष्पाणि जमदग्निः प्रजापतिः श्रद्धाद्यर्थमाहरत् आददे । ताः सुमनसो यशसा कीर्त्या भगेनैश्वर्येण च सहाहं प्रतिगृह्णामि श्रद्धाद्यर्थम् । तत्र श्रद्धा धर्मादरः । मेधा धारणाशक्तिः । कामोऽभिलाषपूर्त्तिः । इन्द्रियन्तत्पाटवम् । अथेति सुमनसाङ्ग्रहणानन्तरम् तानि स्वशिरस्यवबध्नाति । यद्यशोऽप्सरसामिति मन्त्रेण । अस्यार्थः । हे सुमनसः इन्द्रो देवः अप्सरसाम् उर्वश्यादीनाङ्कुसुमावबन्धनेन यद्यशः सर्वजनप्रियत्वं चकार कृतवान् । तेन यशसा सङ्ग्रथिताः युष्मानाबध्नामि चूडायाम् । किम्भूतं यशः । विपुलं विशालम् । पृथु सन्ततन्दीर्घम् । तद्यशो मयि विषये तिष्ठत्विति शेषः । उष्णीषेण शिरोवेष्टनवस्त्रेण शिरो वेष्टयते । युवासुवासा इति मन्त्रेण । व्याख्यातश्चायम्मेखलाबन्धनप्रसङ्गे । कर्णवेष्टकौ कुण्डले कर्णयोरामुञ्चति । अलङ्करणमसीति मन्त्रेण । अस्यार्थः । तत्र प्रजापतिर्यजुरग्निः कर्णालङ्करणे० । हे कुण्डलदेवते त्वम् अलङ्करणम् अलङ्कारशोभाऽसि । अतस्त्वयाऽलङ्कृतस्य मम भूयो बहु वारं वारं वा अलङ्करणम्भूयादस्तु । वृत्रस्यासिकनीनक इत्यादि चक्षुर्मेदेहीत्यन्तेन मन्त्रेणाङ्क्तेऽक्षिणी । तत्र प्रजापतिर्गायत्री अञ्जनं तत्करणे० । रोचिष्णुरसीत्येतावता मन्त्रेणादर्शे दर्पणे मुखम्प्रेक्षते । तत्र सूर्यो यजुरादर्शो मुखनिरीक्षणे० । छत्रम्प्रतिगृह्णाति । बृहस्पतेरिति मन्त्रेण । अस्यार्थः । तत्र गौतमो गायत्री छत्रन्तद्ग्रहणे० । हे छत्र त्वं बृहस्पतिः पितामहस्य छदिः घर्मादिनिवर्तकोऽसि प्रथमम् । अतः पाप्मनो निषिद्धाचरणान्मामन्तर्द्धेहि व्यवहितङ्कुरु तेजसः प्रतापात् यशसश्च सकाशान्माऽन्तर्द्धेहि माव्यवहितङ्कुरु तद्युक्तङ्कुर्वित्यर्थः । प्रतिष्ठेस्थ इति मन्त्रेणोपानहौ पादयोः प्रतिमुञ्चते परिधत्ते युगपत् शक्यत्वाद् द्विवचनान्तत्वाच्च मन्त्रस्य । अस्यार्थः । तत्र प्रजापतिर्यजुर्द्धर्म उपानद्ग्रहणे० । हे उपानहौ तद्देवते युवाम्प्रतिष्ठे स्थितिहेतू स्थः भवथः । अतो विश्वतः सर्वस्मात्परिभवान्मा मां

पातं रक्षतम् । विश्वाभ्य इति मन्त्रेण वैणवन्दण्डमादत्ते । अस्यार्थः । तत्र याज्ञवल्क्यो यजुर्दण्डस्तद्गृहणे० । हे दण्ड विश्वाभ्यः सर्वाभ्यः नाष्ट्राभ्यो राक्षसादिभ्यः सर्वतः सर्वावस्थासु मा माम्परिपाहि सर्वभावेन रक्ष । दन्तप्रक्षालनादीनि तत्साधनानि प्राप्य नित्यमपि नित्यमेव मन्त्रो भवति । अपि एवार्थे । वासःप्रभृतिष्वपूर्वेष्वेव मन्त्रः ॥ ॥ ६ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

हरिहरः ॥ वेदꣳ समाप्य स्नायाद्ब्रह्मचर्यं वाऽष्टाचत्वारिꣳशकम् । वेदं मन्त्रब्राह्मणात्मकं समाप्य सम्यक् पाठतोऽर्थतश्च अन्तं नीत्वा स्नायात् वक्ष्यमाणेन विधिना स्नानं कुर्यात् । अथवा ब्रह्मचर्यं व्रतम् अष्टाचत्वारिꣳशकम् अष्टाचत्वारिंशद्वर्षं निर्वर्त्य समाप्य अवसानं प्रापय्य गुरुणाऽनुमतः स्नायादिति गतेन सम्बन्धः । द्वादशकेऽप्येके गुरुणाऽनुज्ञातः । एके सूत्रकाराः द्वादशकेऽपि द्वादशवर्षसमाप्येतिव्रते चरिते स्नायादिति मन्यन्ते तत्रापि गुरुणाऽनुज्ञातः । अत्रासूत्रितमपि उभयं वेदं व्रतं च समाप्य वा स्नायादित्यनुषज्यते । यतः पूर्वं स्नातकस्य त्रैविध्यमुक्तम् । विधिर्विधेयस्तर्कश्च वेदः । वेदं समाप्येत्युक्तम् । तत्र कियान् वेद इत्यपेक्षायामाह । विधिर्विधीयते इति विधिः अग्निं आदधीत अग्निहोत्रं जुहुयात् ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादि विधायकं ब्राह्मणवाक्यम् । विधेयः विधीयते विनियुज्यते ब्राह्मणवाक्येन कर्माङ्गत्वेनेति विधेयो मन्त्रः इषेत्वादिः । [ विधिर्विधेयस्तर्कश्च वेदः यदत्रैतस्मिन्दर्शने सति समस्तवैदिकसंहारात्मिका मीमांसाऽपि वेदशब्दवाच्या भवतीत्यादिना तर्कपदं मीमांसापरमङ्गीकृत्य वार्तिककारिताया मीमांसाया अपि वेदत्वमुक्तम् तद्विध्यादित्रयस्य वेदत्वप्रतिपादनार्थेयं स्मृतिरिति षडङ्गवेदत्वस्मृतितुल्यन्यायतया पूर्वपक्षसंयताभ्युपगमेनैव तद्दृष्टान्तेन कल्पसूत्राणां छन्दस्त्वाभावमुपपादयितुं । नत्वेवमेव स्मृतिव्याख्यानं सम्मतम् अध्येतॄणां मीमांसायां वेदशब्दाप्रसिद्धेः नचाध्येतृप्रसिद्धिनिरपेक्षैवेयं स्मृतिर्विध्यादित्रयस्य वेदत्वं प्रतिपादयतीति वाच्यम् । तथासति तन्नैरपेक्ष्येण स्मृतिमात्रपर्यालोचने तत्स्वारस्येन विध्युद्देशमात्रस्यैव वेदत्वापत्तावर्थवादादीनामवेदत्वापत्तेः विधेयत्वमग्निहोत्रन्यायविस्तरयोरपि वेदत्वापत्तेश्च । अथाध्येतृप्रसिद्ध्यनुरोधेन विधिविधेयशब्दयोर्ब्राह्मणमन्त्रपरत्वान्नाव्याप्त्यतिव्याप्ती तर्हि स्मृतेरध्येतृप्रसिद्धिसापेक्षत्वापत्तौ कथन्तर्कतदप्रसिद्धवेदत्वप्रतिपादनपरता । नच तदंशे स्वातन्त्र्यम् अपेक्षानपेक्षाविध्यनुवादकृतवैरूप्यापत्तेः न्यायविस्तरातिप्रसङ्गानिवृत्तेश्च व्यवहारानु-

[ ] एतावान् ग्रन्थो मुद्रितपुस्तक एवोपलब्धः ।

प्रविष्टपदार्थनिर्णये तद्विरोधेन शास्त्रस्यासामर्थ्याच्च । तस्मादध्येतृप्रसिद्धस्यैव मन्त्र-ब्राह्मणात्मकस्य वेदस्य कश्चिद्विधिनाऽङ्गविधायकः कश्चिन्मन्त्रात्मको विधेयः कश्चित्स एष नेति नेति त्रैयम्बकाः पुरोडाशा इत्यादिवत् त्रैविध्यमनयैवोच्यत इति तात्त्विकोऽर्थः अतः षडङ्गा एव वेदस्मृतिरपि परमतोपन्यासात्पूर्वपक्षस्मृति-रेवेत्यलम् ]। तर्कोऽर्थवाद इति कर्कोपाध्यायः । यथा अक्ताःशर्करा उपद-धाति इति विधिः श्रूयते । तत्राञ्जनसाधनं घृतम् तैलं वसा च तन्मध्ये केनाक्ता इति संशये तेजो वै घृतमिति अर्थवादात् घृतेनाक्ता इति निर्णी-यते. अतस्तर्कोऽर्थवादः । तर्को मीमांसेति कल्पतरुकारः । चकारान्नामधेयभा-गसङ्ग्रहः । यतो वेदो विध्यर्थवादमन्त्रनामधेयभेदैश्चतुर्धा मीमांसकैर्विचा-र्यते । यथा अग्निहोत्राघारौ यागभेदौ । उद्भिद्वलभिदिति नामधेयानि । षडङ्गमेके । एके सूत्रकाराः षडङ्गं वेदं समाप्य स्नायादित्याहुः । षट् शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषं छन्दांसि अङ्गानि यस्य वेदस्य स षडङ्गः तं षडङ्गम् । न कल्पमात्रे । कल्पमात्रे ग्रन्थमात्रे मन्त्रे वा ब्राह्मणे वा अधीते न स्नानमि-च्छन्ति । कल्पमात्राध्ययनस्य अनुष्ठानायोग्यत्वात् । यत अथातोऽधिकारः अथातो धर्मजिज्ञासा अथातो ब्रह्मजिज्ञासेत्यादिभिरधिकारसूत्रैः अधीतसकल-वेदस्याग्निहोत्रादिकर्मस्वधिकार इत्याचार्यैर्वर्ण्यते । कामं तु याज्ञिकस्य । तु-शब्दः पक्षव्यावृत्तौ । काममिच्छया याज्ञिकस्य आध्वर्यवादियज्ञविद्याकर्मकुशलस्य स्नानमिच्छन्ति । अयमर्थः । मन्त्रब्राह्मणात्मकं वेदमधीत्य अवबुध्य च स्नायादि-त्येकः पक्षः । साङ्गं वेदमधीत्यावबुध्य च स्नायादित्यपरः । ग्रन्थमात्रमप्यधीत्य यज्ञविद्यां चाभ्यस्य स्नायादिति तृतीयः । यज्ञविद्याविरहेण ग्रन्थमात्रे अधीते न स्नायादिति निषेधः । यतो वेदाध्ययनं वेदविहिताग्निहोत्रादिकर्माद्यनुष्ठानप्रयो-जनम् । उपसङ्गृह्य गुरुं समिधोऽभ्याधाय परिश्रितस्योत्तरतः कुशेषु प्रागग्रेषु पुरस्तात्स्थित्वाऽष्टानामुदकुम्भानां येऽप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो मयूषोमनोहास्खलोविरुजस्तनूदूषिरिन्द्रियहाअतितान्सृजामि यो रोचनस्तमिह गृह्णामीत्येकस्मादपो गृहीत्वा तेनाभिषिञ्चते । स्नायादि-त्युक्तम् । तत्र कथं स्नायादित्यपेक्षिते आह । उपसङ्गृह्य उपसङ्ग्रहणविधिना प्रण-म्य कं गुरुमाचार्यं समिधः पूर्वोक्तलक्षणास्तिस्रः परिसमूहनादिन्त्र्यायुषकरणान्तेन विधिना आचार्यनिर्वर्तितसमावर्तनाङ्गहोमेऽग्नौ आधाय प्रक्षिप्य । अत्र समिधोऽ-

भ्याधायेत्युक्तम्। तत्समिदाधानं किं वेदाहुत्यादिसमावर्तनहोमात्पूर्वमुत पश्चात्। वेदाहुतिहोमः कुतः प्राप्त इतिचेत्। एतदेव व्रतादेशनविसर्गेष्वित्यतिदेशात्। तर्हि पूर्वं भवतु। उपसङ्गृह्य गुरुꣳ समिधोभ्याधायेति पाठात् समिदाधानानन्तरं वेदाहुतीनामवसर इति गम्यते। नैतदेवम्। श्रुत्या हि वेदाहुतीनामवसरः समिदाधानात्पूर्वं समिदाधानञ्च स्नानात्पूर्वमिति क्रमस्य ज्ञापितत्वात्। कथं स यामुपयन् समिधमादधाति सा प्रायणीया याꣳस्नास्यन्त्सोदयनीयेति श्रुतेः। तस्मात्समावर्तनहोमान्ते उपसङ्ग्रहणादि। परिश्रितस्य परिवेष्टितस्य सर्वतः प्रच्छादितस्य समावर्तनाङ्गहोमसाधनाग्निस्थापनप्रदेशस्योत्तरतः उत्तरस्मिन् भागे कुशेषु प्रागग्रेषु प्राक्कूलेषु आस्तीर्णेषु क्व पुरस्तात्प्राच्यान्दिशि केषां अष्टानामुदकुम्भानां दक्षिणोत्तरायतानां अष्टसङ्ख्याकानां अमलजलपूर्णानां आम्रादिशुभपल्लवमुखानां स्थित्वा स्थितिं कृत्वा ऊर्ध्वीभूयेत्यर्थः। ये अप्स्वन्तरग्नय इत्यादिना मन्त्रेण तमिह गृह्णामीत्यन्तेन एकस्मात् प्रथमातिक्रमे कारणाभावादिति न्यायेन प्रथमात् प्राञ्च्युदञ्चि च कर्माणि इत्यनेन न्यायेन दक्षिणस्य प्रथमत्वम्। अपः जलं दक्षिणहस्तेन गृहीत्वा तेन जलेन अभिषिञ्चति अभ्युक्षति आत्मानं शिरस्तः स्नानकर्ता तत्र मन्त्रः। तेन मामभिषिञ्चामि इत्यादि ब्रह्मवर्चसायेत्यन्तः। येन श्रियमकृणुतां येनावमृशताꣳसुराम्। येनाक्ष्यावभ्यषिञ्चतां यद्वां तदश्विना यश इत्यापोहिष्ठेति च प्रत्यृचं त्रिभिस्तूष्णीमितरैः। एवम् एकोदकुम्भजलसाध्यं स्नानमभिधाय इतरसप्तोदकुम्भजलस्नानमात्रे मन्त्रविशेषाभिधानात्। येऽप्स्वन्तरग्नय इत्ययमेव सर्वोदकुम्भजलग्रहणे साधारणो मन्त्र इति प्रतीयते। ततः सर्वेभ्यो द्वितीयादिकुम्भेभ्यः प्रत्येकं येऽप्स्वन्तरिति मन्त्रेण जलमादाय वक्ष्यमाणैर्मन्त्रैर्यथाक्रममभिषिञ्चते। तद्यथा येनश्रियमिति द्वितीयं आपोहिष्ठेति तृतीयम् यो वः शिवतम इति चतुर्थम् तस्माअरङ्गमिति पञ्चमम्। तूष्णीमितराणि त्रीणि स्नानानि। उदुत्तममिति मेखलामुन्मुच्य दण्डन्निधाय वासोऽन्यत्परिधायादित्यमुपतिष्ठते उद्यन्भ्राजभृष्णुरित्यादि। उदुत्तममिति मन्त्रेण मेखलां रशनामुन्मुच्य उच्छब्दसामर्थ्यात् शिरोमार्गेण निस्सार्य निधाय तां च भूमौ निक्षिप्य अन्यद्वस्त्रं परिधाय आदित्यं सूर्यम् उद्यन्भ्राजभृष्णुरित्यादिभिर्मन्त्रैः उपतिष्ठते स्तौति॥ दधितिलान्वाप्राश्य जटालोमनखानि सꣳहृत्यौदुम्बरेण दन्तान् धावेतान्नाद्याय व्यूहध्वमिति। ततो दधितिलानामन्यतरं प्राश्य अशित्वा

जटाश्च लोमानि च नखानि च जटालोमनखानि तानि संहृत्य संहार्य वापयित्वेत्यर्थः । अत्र संहृत्येति णिचो लोपश्छान्दसः स्वयं संहर्तुमशक्यत्वात् । औदुम्बरेण द्वादशाङ्गुलसम्मितेन कनिष्ठिकाग्रवत्स्थूलेन उदुम्बरकाष्ठेन । अन्नाद्याय व्यूहध्वमिति मन्त्रेण दन्तान् धावेत प्रक्षालयेद्ब्राह्मणः । दशाङ्गुलेन राजन्यः अष्टाङ्गुलेन वैश्य इति विशेषः ॥ अत्र जटालोमनखवपननिमित्तादुत्तरत्र पुनः स्नात्वेति पुनःशब्दसामर्थ्याञ्च स्नानमापद्यते अतो वपनानन्तरं स्नानाचमने विधाय दन्तान्प्रक्षालयेदिति सिद्धम् । उत्साद्य पुनः स्नात्वाऽनुलेपनं नासिकयोर्मुखस्य चोपगृह्णीते प्राणापानौ म इति । उत्साद्य सुगन्धिना द्रव्येण शरीरमुद्वर्त्य पुनर्भूयः स्नात्वा शिरःप्रभृतीन्यङ्गानि प्रक्षाल्य अनुलेपनं चन्दनादि मुखस्य नासिकयोश्च उपगृह्णीते । मुखं नासिकां च अनुलिम्पति । प्राणापानौ मे तर्पयेत्यादिना श्रोत्रं मे तर्पयेत्यन्तेन मन्त्रेण । पितरः शुन्धध्वमिति पाण्योरवनेजनं दक्षिणानुषिच्यानुलिप्य जपेत्सुचक्षा अहमक्षिभ्यामिति । ततः पाण्योरवनेजनं हस्तयोः प्रक्षालनमुदकं पितरः शुन्धध्वमित्यनेन मन्त्रेण प्राचीनावीती दक्षिणाभिमुखो भूत्वा दक्षिणस्यां दिशि निषिच्य प्रक्षिप्य यज्ञोपवीती भूत्वा पितृकर्मकरणनिमित्तकं उदकस्पर्शं विधाय चन्दनादिना सुगन्धिद्रव्येण गात्राण्यनुलिप्य सुचक्षा अहमक्षिभ्यामित्यादिभूयासमित्यन्तं मन्त्रं जपेत् । अहतं वासो धौतं वाऽमौत्रेणाच्छादयीत परिधास्या इति ॥ ततः अहतं नवं सदशं पवित्रं वासः वसनम् आच्छादयीत परिदधीत तदलाभे अमौत्रेण अरजकेण धौतं क्षालितं परिधास्या इत्यादिना अभिसंव्ययिष्य इत्यन्तेन मन्त्रेण । अथोत्तरीयं यशसामेति । अथ अन्तरीयपरिधानानन्तरं तादृशमेवोत्तरीयं वासो यशसामित्यादि यशो मा प्रतिपद्यतामित्यन्तेन मन्त्रेण आच्छादयीतेति गतेनाख्यातेन सम्बन्धः । एकं चेत्पूर्वस्योत्तरवर्गेण प्रच्छादयीत । चेद्यदि एकमेव वासो भवति तदा पूर्वस्यैव परिधानीयस्य वासस उत्तरवर्गेण उत्तरभागेन प्रच्छादयीत। यशसामेति मन्त्रेणोत्तरीयं कुर्यादित्यर्थः। सुमनसः प्रतिगृह्णाति या आहरदिति । सुमनसः पुष्पाणि प्रतिगृह्णाति । अन्येन दत्तान्यादत्ते। या आहरज्जमदग्निरित्यादि यशसा च भगेन चेत्यन्तेन मन्त्रेण । अथावबध्नीते यद्यश इति । अथ ताः प्रतिगृह्य अवबध्नीते शिरसि बध्नाति यद्यशोऽप्सरसामित्यादि यशोमयीत्यन्तेन मन्त्रेण । उष्णीषेण शिरो वेष्टयते युवा सुवासा इति । उष्णीषेण पूर्वोक्तलक्षणेन तृतीयेन वाससा

शिरो मूर्द्धानं वेष्टयते । युवा सुवासा इत्यादिकया देवयन्त इत्येतयर्चा । अलङ्करणमसि भूयोऽलङ्करणं भूयादिति कर्णवेष्टकौ । अलङ्करणमसीति मन्त्रेण दक्षिणोत्तरयोः कर्णयोर्वेष्टकौ भूषणे प्रतिमन्त्रं प्रतिमुञ्चते परिधत्ते । वृत्रस्येत्यक्ष्यङ्क्ष्यौ । वृत्रस्येत्यादिना चक्षुर्मे देहीत्यन्तेन मन्त्रेण यथाक्रमं दक्षिणवामे मन्त्रावृत्त्याऽक्षिणी अङ्क्ते सौवीराञ्जनेन संस्करोति । रोचिष्णुरसीत्यात्मानमादर्शे प्रेक्षते । रोचिष्णुरसीत्यनेन मन्त्रेण आत्मानं मुखप्रभृति शरीरं आदर्शे दर्पणे प्रेक्षते पश्यति । छत्रं प्रतिगृह्णाति बृहस्पतेश्छदिरसि पाप्मनो मामन्तर्धेहि तेजसो यशसो मान्तर्द्धेहीति । छत्रं आतपत्रं बृहस्पतेश्छदिरसीत्यादिना यशसो मान्तर्धेहीत्यन्तेन मन्त्रेण प्रतिगृह्णाति प्रतिग्रहशब्दसामर्थ्यात् अन्यत आदत्ते । प्रतिष्ठे स्थो विश्वतोमापातमित्युपानहौ प्रतिमुञ्चते । उपानहौ पादत्राणे प्रतिमुञ्चते परिधत्ते प्रतिष्ठे स्थो विश्वतो मापातमित्यनेन मन्त्रेण परिधत्ते । मन्त्रस्य द्विवचनान्तत्वात् परिधातुं शक्यत्वाच्च युगपत्पादयोः प्रतिमुञ्चते प्रतिष्ठे इति द्विवचनम् स्थ इति च ॥ विश्वाभ्यो मानाष्ट्राभ्यस्परिपाहि सर्वत इति वैणवं दण्डमादत्ते । विश्वाभ्यो मेत्यादिसर्वतइत्यन्तेन मन्त्रेण वैणवं वंशमयं दण्डं यष्टिमादत्ते गृह्णाति तच्चोक्तन्यायेन पूर्वदण्डं त्यक्त्वैव । इदमभिषेकप्रभृति दण्डग्रहणान्तं कर्मजातं स्नानकर्ता करोति नाचार्यः । दन्तप्रक्षालनादीनि नित्यमपि वासश्छत्रोपानहश्चापूर्वाणि चेन्मन्त्रः । दन्तप्रक्षालनमादौ येषां पुष्पादानादीनां तानि दन्तप्रक्षालनादीनि नित्यमपि सर्वदा मन्त्रवन्ति स्नातकस्य भवन्ति । वाससी च छत्रं च उपानहौ च वासश्छत्रोपानहं चकाराद्दण्डोऽपि । एतानि चेद्यदि अपूर्वाणि नूतनानि ध्रियन्ते गृह्यन्ते तदा मन्त्रो भवति तद्ग्रहणे ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

गदाधरः ॥ वेदꣳ समाप्य स्नायात् । स्नानशब्देन समावर्तनसंस्कार उच्यते । वेदं मन्त्रब्राह्मणात्मकं समाप्य सम्यक् पाठतोऽर्थतश्चान्तन्नीत्वा स्नायाद्वक्ष्यमाणविधिना स्नानं कुर्यात् । ब्रह्मचर्यं वाऽष्टाचत्वारिꣳशकम् । अथवा ब्रह्मचर्यं व्रतं अष्टाचत्वारिंशकं अष्टाचत्वारिंशद्वर्षं निर्वर्त्य समाप्य अवसानं प्रापय्य गुरुणाऽनुज्ञातः स्नायादिति सम्बन्धः । मीमांसकास्तु अष्टाचत्वारिंशकं व्रतं समाप्य अवसानं कुर्यादिति पक्षं नाङ्गीकुर्वन्ति । जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्या-

धानश्रुतिविरोधात् । नच विकल्पः अतुल्यत्वात् । प्रत्यक्षमेकं श्रुतिवचनम् । कल्प्य-मपरम् । कल्प्यप्रत्यक्षयोः प्रत्यक्षं बलवदिति भर्तृयज्ञभाष्ये । द्वादशकेऽप्येके । द्वादशवार्षिके व्रते समाप्तेऽप्येके स्नानमिच्छन्ति । अन्येतु वेदव्रतसमाप्त्युत्तरं स्नान-मिच्छन्ति । गुरुणाऽनुज्ञातः । स्नायादिति शेषः । गुर्वनुज्ञा च समावर्तनकर्माङ्गं नतु स्नानकालान्तरमेतत् । वेदꣳ समाप्य स्नायादित्युक्तम् । तत्र वेदशब्देन किमु-च्यते इत्यत आह । विधिर्विधेयस्तर्कश्च वेदः । विधत्त इति विधीयत इति वा विधिः । दर्शपूर्णमासाभ्यां यजेत अग्निहोत्रं जुहुयादित्यादिविधायकं ब्राह्मणवाक्यं । विधीयते विनियुज्यते ब्राह्मणवाक्येन कर्माङ्गत्वेनेति विधेयो मन्त्रः । इषेत्वादिः । तर्कशब्देनार्थवादोऽभिधीयते । तर्क्यते ह्यनेन सन्दिग्धोऽर्थः । यथा अक्ताः शर्करा उपदधाति तेजो वै घृतमिति । अञ्जनं तैलवसादिनाऽपि सम्भवति । तत्र तेजो वै घृतमिति घृतसंस्तवात् तर्क्यते घृताक्ता इति । तेन विध्यर्थवादमन्त्रा वेदशब्देनाभि-धीयन्त इत्युक्तम् । तर्कः कल्पसूत्रमिति भर्तृयज्ञः । तर्को मीमांसेति कल्पतरुः । च-शब्दान्नामधेयभागसङ्ग्रह इति हरिहरः । षडङ्गमेके । शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षड्भिरङ्गैरुपेतमेक आचार्या वेदमिच्छन्ति । तमधीत्य स्नायादित्यन्वयः । स्नानं च द्वितीयाश्रमप्रतिपत्तिः । तदनुष्ठानयोग्यता च षडङ्गे वेदेऽधिगते भवति । अत एवोच्यते । न कल्पमात्रे । कल्पशब्देन च ग्रन्थमा-त्रमभिधीयते । कल्पमात्रे ग्रन्थमात्रे मन्त्रे वा ब्राह्मणे वा अधीते न स्नानमिच्छ-न्ति । नहि ग्रन्थमात्राध्ययनेन कर्मानुष्ठानयोग्यता भवति । तस्मादर्थतो ग्रन्थत-श्चाधिगम्य स्नानमिति । कामन्तु याज्ञिकस्य । यज्ञं वेदेति याज्ञिकः । तुशब्देन ग्रन्थमात्राधीतस्याध्वर्य्यवादियज्ञविद्याकुशलस्य षडङ्गमर्थतोऽनधिगम्यापि काममि-च्छया स्नानं भवति । तेनायमर्थः । मन्त्रब्राह्मणात्मकं वेदमधीत्यावबुध्य च स्ना-यादित्येकः पक्षः । साङ्गं वेदमधीत्यावबुध्य च स्नायादिति द्वितीयः पक्षः । ग्रन्थ-मात्रमधीत्य यज्ञविद्यां चाभ्यस्य स्नायादिति तृतीयः पक्षः । स्नायादित्युक्तम् तत्र कथं स्नायादित्यपेक्षायामाह । उपसङ्गृह्य गुरुꣳ समिधोऽभ्याधाय परिश्रि-तस्योत्तरतः कुशेषु प्रागग्रेषु पुरस्तात्स्थित्वाऽष्टानामुदकुम्भानां येऽप्स्वन्तर-ग्नयः प्रविष्टा गोह्य उपगोह्यो मयूषोमनोहास्खलो विरुजस्तनूदूषुरिन्द्रिय-हातान्विजहामि । यो रोचनस्तमिहगृह्णामीत्येकस्मादपो गृहीत्वा तेनाभि-षिञ्चते तेन मामभिषिञ्चामि श्रियै यशसे ब्रह्मणेब्रह्मवर्चसायेति । उपस-

ङ्गृह्य गुरुं गुरोः पादोपग्रहणं कृत्वा समिधोऽभ्याधायाग्निपरिचरणं कृत्वा । इतश्च पूर्वं वेदाहुतिहोमः । एतदेव व्रतादेशविसर्गेष्वित्युक्तत्वात् । ननु समिदाधानस्य पश्चाद्वेदाहुतयः कुतो न भवन्ति । क्रमान्तरानभिधानात् । उपसङ्गृह्य गुरुꣳ समिधोऽभ्याधायेतिपाठानुग्रहापत्तेश्च । नैवम् । यतो वेदाहुतीनां पश्चादेव समिदाधानम् ततश्च स्नानमिति श्रूयते । स यामुपयन्त्समिधमादधाति सा प्रायणीया याꣳ स्नास्यन्त्सोदयनीयेति । तस्मात्समिदाधानस्नानयोरव्यवहितकालत्वोपपादनाद्वेदाहुतीनां च स्नानाङ्गत्वातिदेशाच्च समिदाधानात्पूर्वं वेदाहुतिहोम इत्युक्तम् । स्नानं चाष्टभिरुदकुम्भैः क्रमेण । परिश्रितस्य वस्त्रादिना वेष्टितसमावर्तनस्थानस्थितस्याग्नेरुत्तरपार्श्वे स्थापितानामष्टानामुदकुम्भानां दक्षिणोत्तरायतानां पुरस्तात्पूर्वस्यां दिशि आस्तीर्णेषु कुशेषु ब्रह्मचारी स्थित्वा ऊर्द्ध्वीभूय येऽप्स्वन्तरग्नय इति मन्त्रेण प्रथमादुदकुम्भादपो गृहीत्वा तेन मामभिषिञ्चामीति मन्त्रेणात्मानमभिषिञ्चति । मन्त्रार्थः । येऽग्नयो गोह्यादयोऽप्सु अन्तर्मध्ये प्रविष्टाः स्थिताः इन्द्रियहान्ता अष्टौ तान् अमेध्यत्वादमङ्गल्यत्वादेताभ्योऽद्भ्यः सकाशात् अग्नीन् विजहामि पृथक् करोमि त्यजामि । यश्च रोचनोऽग्निर्मेध्यत्वान्मङ्गल्यत्वात् प्रीतिकारित्वाच्च तमिहाप्सु विषये गृह्णामि स्वीकरोमि । यतः अद्भ्योऽग्निरुत्पद्यते संव्रियते आच्छाद्यत इति गोह्यः । उपगोह्यः अङ्गतापकः । मयूषो जन्तुहिंसकः । मनस उत्साहं हन्तीति मनोहाः । अस्वलः प्रध्वंसी अजीर्णकृत् । विविधतया रुजति पीडयतीति विरुजः । तनूं शरीरं दूषयति विकृतिं नयति इति तनूदूषुः । इन्द्रियाणि हन्तीति इन्द्रियहाः । अभिषेकमन्त्रार्थः । तेनोदकेन मां इममात्मानमभिषिञ्चामि । किमर्थम् । श्रियै सपत्त्यर्थम् । यशसे कीर्त्यै । ब्रह्मणे ब्रह्मवर्चसाय । यागाध्यापनोत्कृष्टतेजसे । येन श्रियमकृणुतां येनावमृशताꣳसुरां येनाक्षावभ्यषिञ्चतां यद्वां तदश्विना यश इत्यापोहिष्ठेति च प्रत्यृचं त्रिभिस्तूष्णीमितरैः ॥ अष्टाभ्य उदकुम्भेभ्योऽपां ग्रहणे एक एव मन्त्रो ये अप्स्वन्तरग्नय इति । अभिषेचने तु भिद्यते । तद्यथा । येन श्रियमिति द्वितीयम् । आपो हिष्ठेति तृतीयम् । योवः शिवतम इति चतुर्थम् । तस्मा अरङ्गमिति पञ्चमम् । ततस्तूष्णीं त्रिभिरितरैरुदकुम्भैरभिषेकः । मन्त्रार्थः । हे अश्विनौ येन जलप्रभावेण भवन्तौ सुराणां श्रियं सम्पदं शोभां वा अकृणुताम् कृतवन्तौ । येन च सुराणाममृतं अवमृशताम् प्राप्तवन्तौ । अटोऽदर्शनं छान्दसम् । येन बलेनाक्षौ उपमन्योरक्षिणी अभ्यषिञ्चताम् अभिषिक्तवन्तौ । वां युवयोर्यदेवं भूतं यशस्तत् एतज्जलाभिषेकेण ममाप्यस्त्विति

शेषः। उदुत्तममिति मेखलामुन्मुच्य दण्डन्निधाय वासोऽन्यत्परिधायादित्यमुपतिष्ठत उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्प्रातर्यावभिरस्थाद्दशसनिरसि दशसनिं माकुर्वाविदन्मागमयोद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थाद्दिवा यावभिरस्थाच्छतसनिरसि शतसनिम्माकुर्वाविदन्मागमयोद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्सायं यावभिरस्थात्सहस्रसनिरसि सहस्रसनिं माकुर्वाविदन्मागमयेति। तत उदुत्तममिति मन्त्रेण मेखलां रशनामुन्मुच्य ऊर्ध्वं शिरोमार्गेण निस्सार्य तां च भूमौ निक्षिप्य वासोऽन्यत्परिधाय वस्त्रान्तरं परिहितं कृत्वा उद्यन्भ्राजभृष्णुरितिमन्त्रेण सूर्यमुपतिष्ठते। मेखलानिधानोत्तरं दण्डाजिनयोर्निधानम्। तूष्णीमिति जयरामकारिकाकारौ। मन्त्रार्थः। हे सूर्य यतो भवान् प्रातः सवने यावभिर्गमनशीलैर्ऋष्यादिसप्तकगणैः सेवितोऽस्थात् तिष्ठति यथेन्द्रो मरुद्भिरस्थात् तिष्ठति तद्वत्। किम्भूतः उद्यन् उद्गच्छन् भ्राजभृष्णुः स्वप्रभयाऽन्यतेजउद्भासकः। अविदन् सर्वं शुभाशुभं जानन्। किञ्च। यथाच त्वं प्रातः सवने दशसनिः दशसङ्ख्यातानां गवादीनां सनिर्दाता। षणु दाने। अतो मामपि दशसनिं दशगुणदक्षिणादिदातारं कुरु। मा मां विदन् वेदयन् ज्ञापयन् गमय प्रापय प्रतिष्ठामितिशेषः। एवमुत्तरत्रापि व्याख्येयम्॥ दधितिलान्वा प्राश्य जटालोमनखानि सꣳहृत्यौदुम्बरेण दन्तान्धावेतान्नाद्याय व्यूहध्वꣳ सोमोराजाऽयमागमत् स मे मुखं प्रमार्क्ष्यते यशसा च भगेन चेति॥ ततो दधितिलयोरन्यतरं प्राशयित्वा जटाश्च लोमानि च नखानि च जटालोमनखानि तानि संहृत्यापनीय वापयित्वा। संहृत्येत्यत्र णिचो लोपश्छान्दसः। स्वयं संहर्तुमशक्यत्वात्। औदुम्बरेण दन्तान्धावेत औदुम्बरेण काष्ठेन दन्तान् शोधयेत् अन्नाद्यायेति मन्त्रेण। हे दन्ताः यूयं अन्नाद्याय अन्नादनाय व्यूहध्वम् निर्मला भवत। यतोऽयं राजा सोमश्चन्द्रः काष्ठरूपेणागमत् आगतः। अतः स एव सोमो मे मम मुखं प्रमार्क्ष्यते शोधयिष्यति। केन यशसा सत्कीर्त्या भगेन भाग्येन च। दन्तधावनस्य नित्यकाम्यत्वादुभयफलसम्बन्ध इति मुरारिः। उत्साद्य पुनः स्नात्वाऽनुलेपनं नासिकयोर्मुखस्य चोपगृह्णीते प्राणापानौ मे तर्पय चक्षुर्मे तर्पय श्रोत्रं मे तर्पयेति॥ उत्साद्य अङ्गोद्वर्त्तनेन मलमपसार्य पुनः स्नात्वा मलापकर्षणस्नानोत्तरं पुनः स्नानं कृत्वाऽनुलेपनं चन्दनादि नासिकयोर्मुखस्य चोपगृह्णीते आदत्ते प्राणापानौ मे इति मन्त्रेण। मुखनासिके चानुलिम्पतीति

हरिहरः । पाण्योरवनेजनं निषिच्येति वक्ष्यमाणत्वात् अत्र पाणिभ्यामनुलेपनग्रहणम् । मन्त्रार्थः । हे उपलेपनाधिदेवते मे मम प्राणापानौ वायू तर्पय प्रीणय । तथा मे चक्षुरिन्द्रियम् । तथा मे श्रोत्रं श्रवणेन्द्रियं च तर्पय ॥ पितरः शुन्धध्वमिति पाण्योरवनेजनं दक्षिणानिषिच्यानुलिप्य जपेत् । सुचक्षा अहमक्षीभ्याम्भूयासꣳ सुवर्चा मुखेन । सुश्रुत्कर्णाभ्यां भूयासमिति ॥ प्राचीनावीती दक्षिणाभिमुखो भूत्वा पितरः शुन्धध्वमित्येतावता मन्त्रेण पाण्योरवनेजनं हस्तयोः प्रक्षालनोदकं दक्षिणानिषिच्य दक्षिणस्यां दिशि निषिच्य प्रक्षिप्य यज्ञोपवीती भूत्वा पितृकर्मत्वादुदकं स्पृष्ट्वा चन्दनेनात्मानमनुलिप्य सुचक्षा अहमिति मन्त्रं जपेत् । अत्र दक्षिणापदं लुप्तसप्तम्यन्तम् । मन्त्रार्थः । हे सवितः अहमक्षीभ्यां नेत्राभ्यां कृत्वा सुचक्षाः सुदर्शनो भूयासम् भवेयम् । तथा मुखेन सुवर्चाः सुतेजाः भूयासमिति पूर्वत्र सम्बन्धः । तथा कर्णाभ्यां सुश्रुत् सुश्रवणो भूयासम् । अहतं वासो धौतं वाऽमौत्रेणाच्छादयीत परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि । शतं च जीवामि शरदः पुरूचीरायस्पोषमभिसंव्ययिष्य इति ॥ अहतं नवीनं सदशं वासः वसनं अथवाऽमौत्रेण अरजकेन धौतं वास आच्छादयीत परिधास्या इति मन्त्रेण । मन्त्रार्थः ॥ हे वासोदेवते परिधास्यै अनेकशुभवस्त्रपरिधानाय । तथा यशोधास्यै स्तुत्यै । दीर्घायुत्वाय दीर्घजीवनाय च । इदं वासः संव्ययिष्ये परिधास्ये । किम्भूतः । वासोदेवतानुग्रहेण जरदष्टिरस्मि । वृद्धत्वव्याप्यायुर्भवामि । पुरूचीः पुम्भिर्बहुभिः पुत्रधनादिभिश्च संयोगोऽस्ति यस्यसः । ऊच समवाये । किम्भूतं वासः रायस्पोषम् धनादिपोषणं पुष्टिकरम् । किंच एतत्सम्बन्धेनाहं शतं शरदो वर्षाणि जीवामि ॥ अथोत्तरीयं यशसा माद्यावापृथिवी यशसेन्द्राबृहस्पती । यशोभगश्च माऽविन्दद्यशो माप्रतिपद्यतामिति ॥ अथ परिधानानन्तरमाचम्य यशसामिति मन्त्रेण अहतमेव वास उत्तरीयं आच्छादयीतेति सम्बन्धः । मन्त्रार्थः । हे वासोदेवते द्यावापृथिवी द्यावाभूमी यशसा युक्तौ मा मां अविन्दत् विन्दताम् प्राप्नुतामिति यावत् । विद्लृलाभे धातुः । विभक्तिवचनव्यत्ययेनान्वयः । तथा इन्द्राबृहस्पती अपि यशसा युक्तौ मा अविन्दत् । तथा भगः सूर्योऽपि यशसा अविन्दत् । तश्चैतैः सम्पादितं यशो मा मां प्रतिपद्यताम् मयि सर्वदा तिष्ठत्वित्यर्थः ॥ एकश्चेत्पूर्वस्योत्तरवर्गेण प्रच्छादयीत ॥ चेद्यदि एकं वासो भवति द्वितीयं न भवति तदा पूर्वस्य

परिधानीयस्यैव वासस उत्तरवर्गेण उत्तरभागेन प्रच्छादयीत उत्तरीयं कुर्यात् । तत्रापि यशसामेति मन्त्रो भवति क्रियान्तरत्वात् । अत्रैवम् । पूर्वं वस्त्रार्द्धं समन्त्रकं परिधाय द्विराचम्य उत्तरार्द्धं गृहीत्वा उत्तरीयं मन्त्रं पठित्वोत्तरीयं कृत्वा पुनर्द्विराचामेत् ॥ **सुमनसः प्रतिगृह्णाति या आहरज्जमदग्निः श्रद्धायै मेधायै कामायेन्द्रियाय । ता अहं प्रतिगृह्णामि यशसा च भगेन चेति ॥** सुमनसः पुष्पाणि । प्रतीत्युपसर्गसामर्थ्यात् गुरुणा समर्पिताः सुमनसः प्रतिगृह्णाति या आहरदिति मन्त्रेण । याः सुमनसः पुष्पाणि जमदग्निः प्रजापतिः श्रद्धाद्यर्थमाहरत् आददौ । ताः सुमनसो यशसा कीर्त्या भगेनैश्वर्येण च सहाहं प्रतिगृह्णामि श्रद्धाद्यर्थम्। तत्र श्रद्धा धर्म्मादरः। मेधा धारणाशक्तिः । कामोऽभिलाषपूर्तिः । इन्द्रियं तत्पाटवम् । **अथावबध्नीते यद्यशोऽप्सरसामिन्द्रश्चकार विपुलं पृथु । तेन सङ्ग्रथिताः सुमनस आबध्नामि यशो मयीति ॥** ताः प्रतिगृह्य स्वशिरसि बध्नाति यद्यशोऽप्सरसामिति मन्त्रेण । मन्त्रार्थः । हे सुमनसः इन्द्रो देवः अप्सरसामुर्वश्यादीनां कुसुमावबन्धेन यद्यशः सर्वजनप्रियत्वं चकार कृतवान् तेन यशसा सङ्ग्रथिताः युष्मान् आबध्नामि चूडायाम् । किम्भूतं यशः विपुलं विशालम् । पृथु सन्ततं दीर्घं तद्यशो मयि विषये तिष्ठत्वित्यर्थः ॥ **उष्णीषेण शिरो वेष्टयते युवा सुवासा इति ॥** उष्णीषेण शिरोवेष्टनवस्त्रेण शिरो वेष्टयते । युवा सुवासा इति मन्त्रेण । व्याख्यातश्चायमुपनयने ॥ **अलङ्करणमसि भूयोऽलङ्करणम्भूयादिति कर्णवेष्टकौ ॥** कर्णवेष्टकौ कुण्डले दक्षिणसव्यकर्णयोरामुञ्चति । अलङ्करणमसीति मन्त्रावृत्त्या । मन्त्रार्थः । हे कुण्डलदेवते त्वमलङ्करणम् अलङ्कारशोभाऽसि । अतस्त्वयाऽलङ्कृतस्य मम भूयो बहुवारं अलङ्करणं भूयात् अस्तु ॥ **वृत्रस्येत्यङ्क्तेऽक्षिणी ॥** वृत्रस्येत्यादिचक्षुर्मेदेहीत्यन्तेन मन्त्रेण कज्जलेन अक्षिणी अङ्क्ते संस्करोति ॥ सौवीराञ्जनेनेति हरिहरः । अत्रच सव्यं नेत्रं अङ्क्त्वा ततो दक्षिणाञ्जनं मन्त्रावृत्त्या । तथाच दीक्षाप्रकरणे लिङ्गम् । सव्यं वा अग्रे मानुष इति । कारिकायाम् । वृत्रस्येत्यक्षिणी अङ्क्तेऽभ्यञ्जनेनाभिनासिकम् । सव्यं प्रथममित्येव श्रूयते बह्वृचश्रुतौ । हरिहरेण दक्षिणाञ्जनं पूर्वमुक्तन्तदाशयं न विद्मः ॥ **रोचिष्णुरसीत्यात्मानमादर्शे प्रेक्षते ॥** आत्मानं सर्वं देहमादर्शे दर्पणे प्रेक्षते पश्यति । रोचिष्णुरसीत्येतावता मन्त्रेण । मन्त्रार्थः । रोचिष्णुः प्रकाशकः ॥ **छत्रं प्रतिगृह्णाति बृहस्पतेश्छदिरसि पाप्मनो मामन्तर्द्धेहि तेजसो यशसो माऽन्तर्द्धेहीति ॥** उपसर्गसामर्थ्याद्गुरुणा

दत्तं छत्रमातपत्रं बृहस्पतेश्छदिरसीति मन्त्रेण प्रतिगृह्णाति । मन्त्रार्थः । हे छत्र त्वं बृहस्पतेः पितामहस्य छदिर्घर्मादिनिवर्तकोऽसि प्रथमम् अतः पाप्मनो निषिद्धाचरणान्माम् अन्तर्द्धेहि अन्तर्हितं कुरु। तेजसश्च सकाशान्माऽन्तर्द्धेहि मा व्यवहितं कुरु तद्युक्तं कुर्वित्यर्थः ॥ प्रतिष्ठे स्थो विश्वतो मापातमित्युपानहौ प्रतिमुञ्चते ॥ प्रतिष्ठे स्थ इति मन्त्रेण उपानहौ पादत्राणे पादयोः प्रतिमुञ्चते परिधत्ते युगपत् । शक्यत्वात् द्विवचनान्तत्वाच्च । मन्त्रार्थः । हे उपानहौ देवते युवां प्रतिष्ठे स्थितिहेतू स्थः भवथः । अतो विश्वतः सर्वस्मात्परिभवात् मा मां पातं रक्षतम् ॥ विश्वाभ्यो मानाष्ट्राभ्यस्परिपाहि सर्वत इति वैणवं दण्डमादत्ते ॥ विश्वाभ्य इति मन्त्रेण वैणवं वंशमयं दण्डं यष्टिमादत्ते । अत्राभिषेकादि दण्डधारणान्तं कर्म स्नानकर्तुर्न त्वाचार्यस्य । मन्त्रार्थः । हे दण्ड विश्वाभ्यः सर्वाभ्यः नाष्ट्राभ्यो राक्षसादिभ्यः सर्वावस्थासु मा मां परिपाहि सर्वभावेन रक्ष ॥ दन्तप्रक्षालनादीनि नित्यमपि वासश्छत्रोपानहश्चापूर्वाणिचेन्मन्त्रः ॥ दन्तप्रक्षालनमादौ येषां पुष्पादीनां तानि दन्तप्रक्षालनादीनि तत्साधनानि प्राप्य नित्यमपि नित्यमेव मन्त्रो भवति । अपि एवार्थे । वाससी च छत्रं च उपानहौ च वासश्छत्रोपानहः चकाराद्दण्डोऽपि । एतानि वाससादीनि चेद्यदि नवीनानि ध्रियन्ते तदैव मन्त्रो भवति न सर्वदा ॥ * ॥ इति श्री सम्राट्स्थपतिवामनात्मजदीक्षितगदाधरकृते गृह्यसूत्रभाष्ये द्वितीयकाण्डे षष्ठी कण्डिका ॥ * ॥ ॥ * ॥ ॥ * ॥

अथ पदार्थक्रमः । सुरेश्वरः । भौमभानुजयोर्वारे नक्षत्रे च व्रतोदिते । ताराचन्द्रविशुद्धौ च स्यात्समावर्तनक्रियेति । एतच्च ब्रह्मचारिव्रतलोपे प्रायश्चित्तं कृत्वा कार्यम् । तदाह बौधायनः । शौचसन्ध्यादर्भभिक्षाऽग्निकार्यराहित्यकौपीनोपवीतमेखलादण्डाजिनाधारणदिवास्वापच्छत्रपादुकास्रग्विधारणोद्वर्तनानुलेपनाञ्जनद्यूतनृत्यगीतवाद्याद्यभिरतो ब्रह्मचारी कृच्छ्रत्रयं चरेदिति । ब्रह्मचारी गुरुमर्घदानेन सम्पूज्य तेनानुज्ञातो ज्योतिश्शास्त्रोक्ते शुभे काले आचार्यगृहे समावर्तनं नाम कर्म कुर्यात् । ब्रह्मचारी कृतनित्यक्रियः कृतप्रातरग्निकार्यश्च । तत आचार्यः प्राणानायम्य देशकालौ स्मृत्वा अस्य ब्रह्मचारिणो गृहस्थाद्याश्रमान्तरप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं समावर्तनाख्यं कर्माहं करिष्ये इतिसङ्कल्प्य तदङ्गभूतं निर्विघ्नार्थं गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं चाहं करिष्ये । श्राद्धादि समाप्य । तत आचार्यं अहं स्नास्ये इत्युक्ते स्नाहीति प्रत्यनुज्ञा

गुरोः । ततः पादोपसङ्ग्रहणं गुरोः । ततः परिश्रिते पञ्च भूसंस्कारान्कृत्वा लौकिकाग्नेः स्थापनम् । वैकल्पिकावधारणे विशेषः । दधिप्राशनम् । अमौत्रधौत-वस्त्रम् । ततो ब्रह्मवरणाद्याज्यभागान्ते विशेषः उपकल्पनीयेषु समिन्धनकाष्ठानि समिधः । पर्युक्षणार्थमुदकम् । हरितकुशाः । अष्टौ उदकुम्भाः । औदुम्बरन्द्वादशाङ्गुलन्दन्तकाष्ठं ब्राह्मणस्य । दशाङ्गुलं राजन्यस्य । अष्टाङ्गुलं वैश्यस्य । दधि । नापितः स्नानार्थमुदकम् उद्वर्तनद्रव्यम् चन्दनम् अहते वाससी । प्रयोगरत्नमते यज्ञोपवीते पुष्पाणि उष्णीषम् कर्णालङ्कारौ अञ्जनम् आदर्शः नूतनं छत्रम् उपानहौ वैणवो दण्डः । ततः पवित्रकरणाद्याज्यभागान्तं कुर्यात् । अन्तरिक्षाय स्वाहा । वायवे स्वाहा । ब्रह्मणे स्वाहा । छन्दोभ्यः स्वाहा । प्रजापतये स्वाहा । देवेभ्यः स्वाहा । ऋषिभ्यः स्वाहा । श्रद्धायै स्वाहा । मेधायै स्वाहा । सदसस्पतये स्वाहा । अनुमतये स्वाहा । लिङ्गोक्तास्त्यागाः । यदि ऋग्वेदमधीत्य स्नाति तदा पृथिव्यै स्वाहा । अग्नये स्वाहेत्याहुतिद्वयं हुत्वा ब्रह्मणे छन्दोभ्य इत्यारभ्यानुमत्यन्ता नवाहुतीर्जुहोति । एवं सामवेदे दिवे सूर्यायेत्याहुतिद्वयं हुत्वा ब्रह्मणे इत्याद्या नवाहुतीर्जुहोति । एवमथर्ववेदेऽपि दिग्भ्यश्चन्द्रमस इत्याहुतिद्वयं हुत्वा ब्रह्मणे छन्दोभ्य इत्याद्या जुहोति । यदि वेदचतुष्टयमधीत्य स्नानं करोति तदा आज्यभागानन्तरं प्रतिवेदं वेदाहुतिद्वयं हुत्वा ब्रह्मणे छन्दोभ्य इत्याज्याहुतीः पुनः पुनर्जुहोति । ततः प्रजापतय इत्यारभ्यानुमत्यन्ताः सप्ताहुतीस्तन्त्रेण जुहोति । एवं वेदद्वयत्रयाध्ययनेऽपि योज्यम् । ततो भूराद्या नवाहुतयः । ततः स्विष्टकृद्धोमः । ततः प्राशनादिप्रणीताविमोकान्तम् । ततो ब्रह्मचारी उपसङ्ग्रहणपूर्वकं गुरुं नमस्कृत्य परिसमूहनादि त्र्यायुषकरणान्तं समिदाधानं तस्मिन्नेवाग्नौ कुर्यात् । तत आचार्यः पुरुषैः परिश्रितस्योत्तरभागे स्थापितानां दक्षिणोत्तरायतानामष्टानाममलजलपूर्णानामुदकुम्भानां पूर्वभागे आस्तृतेषु प्रागग्रेषु कुशेषु उदङ्मुखः स्थित्वा येऽप्स्वन्तरिति मन्त्रेण प्रथमकलशादुदकं गृहीत्वा तेनोदकेन स्वकीयशिरसोऽभिषेकस्तेनमामिति मन्त्रेण । एवमेव द्वितीयादिभ्य उदकुम्भेभ्यो येऽप्स्वन्तरित्यनेनैवैकैकस्माज्जलमादाय वक्ष्यमाणैर्मन्त्रैरभिषेकः । येन श्रियमिति द्वितीयः । आपोहिष्ठेति तृतीयः । योव इति चतुर्थः । तस्मा इति पञ्चमः । ततस्तूष्णीं त्रिवारमभिषेकः । तत उदुत्तममिति मेखलां शिरोमार्गेण निस्सार्य भूमौ प्रक्षेपः । ततः कृष्णाजिनदण्डयोस्त्यागः । वासोऽन्यत्परिधायादित्योपस्थानमुद्यन्भ्राजभृष्णुरिति । ततो दधिप्राशनम् । तिलानां वा । जटालोमनखानां निकृन्तनम् स्नानम् औदुम्बरकाष्ठेन दन्तधावनमन्नाद्यायेति । ततः सुग-

न्धिद्रव्येणोद्वर्तनम्। स्नानम्। चन्दनाद्यनुलेपनं गृहीत्वा मुखनासिकयोरुपग्रहणम्। प्राणापानाविति। ततोऽपसव्येन दक्षिणामुखेन पाण्योरवनेजनजलस्य दक्षिणस्यां दिशि निषेकः पितरः शुन्धध्वमिति। ततः सव्येनोदकालम्भः। ततश्चन्दनेनात्मानमनुलिप्य सुचक्षा अहमिति जपः। अहतवाससः परिधानम् परिधास्या इति। अरजकधौतस्य वा। द्विराचमनम्। धारयेद्वैणवीं यष्टिं सोदकं च कमण्डलुम्। यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले। इति मनूक्तत्वादत्रोपवीतद्वयधारणमिति हरिहरः प्रयोगरत्नकारश्च। तत उत्तरीयवाससो धारणम् यशसामेति। एकं चेत्पूर्वस्यैवोत्तरभागेनोत्तरीयधारणम्॥ या आहरज्जमदग्निरिति सुमनसःप्रतिग्रहः। ततः शिरसि पुष्पबन्धनम् यद्यशोऽप्सरसेति। उष्णीषेण शिरोवेष्टनं युवा सुवासा इति। अलङ्करणमसीति कुण्डलधारणम्। मन्त्रावृत्त्या दक्षिणकर्णे वामकर्णे च। वृत्रस्येत्यक्षिणी अङ्क्ते। प्रथमं वामम्। ततो दक्षिणमनेनैव मन्त्रेण। रोचिष्णुरसीत्यनेनात्मन आदर्शे प्रेक्षणम्। बृहस्पतेरिति छत्रप्रतिग्रहणम्। प्रतिष्ठे स्थ इत्युपानहौ प्रतिमुञ्चते पादयोर्युगपत्। ततो विश्वाभ्य इति दण्डादानम्। अभिषेकादि दण्डादानान्तं स्नानकर्ता करोति नाचार्यः। समावर्तनोत्तरं पूर्वमृतानां त्रिरात्रमाशौचं कार्यम्। आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात्। समाप्ते तूदकं दत्वा त्रिरात्रमशुचिर्भवेदित्युक्तेः। आदिष्टी ब्रह्मचारीति विज्ञानेश्वरः। ब्रह्मचर्ये यदि कश्चिन्न मृतस्तदा त्रिरात्रमध्ये विवाहः कार्योऽन्यथा नेति सिध्यति। जनने तु सत्यपि न त्रिरात्रम्। तत्रातिक्रान्ताशौचाभावात्। उदकं दत्वेति वचनाच्चेति दिक्। ततो मधुपर्कः। इति समावर्तने पदार्थक्रमः॥ अत्र गर्गमते होमो नास्ति अन्यत्तुल्यम्॥ *॥ ॥ *॥

मूलम्। स्नातस्य यमान्वक्ष्यामः॥ १॥ कामादितरः॥ २॥ नृत्यगीतवादित्राणि न कुर्यान्न च गच्छेत्॥ ३॥ कामं तु गीतं गायति वैव गीते वा रमत इति श्रुतेर्ह्यपरम्॥ ४॥ क्षेमे नक्तं ग्रामान्तरं न गच्छेन्न च धावेत्॥ ५॥ उदपानावेक्षणवृक्षारोहणफलप्रपतनसन्धिसर्पणविवृतस्नानविषमलङ्घन शुक्तवदनसन्ध्यादित्यप्रेक्षणभैक्षणानि न कुर्यात् न ह वै स्नात्वा भिक्षेतापह वै स्नात्वा भिक्षां जयतीति श्रुतेः॥ ६॥ वर्षत्यप्रावृतो व्रजेत् अयम्मे वज्रः पाप्मानमपहनदिति॥ ७॥

अप्स्वात्मानं नावेक्षेत ॥ ८ ॥ अजातलोम्नीं विपुंसीं षण्ढञ्च नोपहसेत् ॥ ९ ॥ गर्भिणीं विजन्येति ब्रूयात् ॥ १० ॥ स कुलमिति नकुलम् ॥ ११ ॥ भगालमिति कपालम् ॥ १२ ॥ मणिधनुरितीन्द्रधनुः ॥ १३ ॥ गां धयन्तीं परस्मै नाचक्षीत ॥ १४ ॥ उर्वरायामनन्तर्हितायां भूमावुत्सर्पँस्तिष्ठन्न मूत्रपुरीषे कुर्यात् ॥ १५ ॥ स्वयं प्रशीर्णेन काष्ठेन गुदं प्रमृजीत ॥ १६ ॥ विकृतं वासो नाच्छादयीत ॥ १७ ॥ दृढव्रतो वधत्रःस्यात् सर्वत आत्मानङ्गोपायेत् सर्वेषां मित्रमिव (शुक्रियमध्येष्यमाणः) ॥ १८ ॥ ॥ ७ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

कर्कः । स्नातस्य यमान्वक्ष्यामः प्रतिज्ञासूत्रम् । कामादितरः । इतरः शूद्रोऽभिधीयते स हि स्नातको न भवति । एवं च सति इच्छया शूद्रस्यापि यमेषु अधिकारो भवति । नृत्यगीतवादित्राणि न कुर्यान्न च गच्छेत् । नृत्यादीनि क्रियमाणानि प्रति । कामं तु गीतं । कुर्यात् गच्छेच्च । कर्मण्यौपयिकत्वाद्गीतस्य दृश्यते हि क्वचित्कर्मविशेषे गानम् । ब्राह्मणोऽन्यो गायति । राजन्योऽन्य इति । न चाक्रियमाणं शक्यते गातुमिति । गायति वैव गीते वा रमत इति श्रुतेर्ह्यपरं। वचनमस्ति । अपरग्रहणाच्च पूर्वं न्यायप्राप्तमभिहितम् । क्षेमे नक्तं ग्रामान्तरं न गच्छेत् । अक्षेमे तु नक्तमपि गच्छेत् । नच धावेत ॥ क्षेम एवेति वर्तते ॥ उदपानावेक्षणवृक्षारोहणफलप्रपतनसन्धिसर्पणविवृतस्नानविषमलङ्घनशुक्तवदनसन्ध्यादित्यप्रेक्षणभैक्षणानि न कुर्यात् । उदपानशब्देन कूपोऽभिधीयते । सन्धिशब्देन कुद्वारम् । विवृतस्नानशब्देन नग्नस्नानमुच्यते । विषमलङ्घनं प्रसिद्धमेव । शुक्तवदनमश्लीलवदनम् । सन्ध्यादित्यप्रेक्षणं प्रसिद्धमेव । एतानि न कुर्यात् । भैक्षणप्रतिषेधस्य वाक्यमुदाह्रियते । न ह वै स्नात्वा भिक्षेतापह वै स्नात्वा भिक्षां जयतीति श्रुतेः । अत्र यो दृष्टार्थविषयः प्रतिषेधस्तत्र दृष्टार्थत्वादेवाकरणे प्राप्ते प्रतिषेधविधानसामर्थ्याददृष्टार्थत्वमनुमीयते । वर्षत्यप्रावृतो व्रजेदयम्मे वज्रः पाप्मानमपहनदित्यनेन मन्त्रेण । अप्स्वात्मानं नावेक्षेत । अजातलोम्नीं विपुंसीं षण्ढं च नोपहसेत् । अजातानि लोमानि यस्याः सेयमजातलोम्नी ताम् । विपुंसी या पुमांसं विकरोति कूर्चादिना । षण्ढः प्रसिद्ध

एव । एतानि नोपहसेत् । उपहासशब्देनाभिगम उच्यते । न गच्छेदेतानि प्रति । गर्भिणीं विजन्येति ब्रूयात् । न गर्भिणीमिति । सकुलमिति नकुलम् । भगालमिति कपालम् । मणिधनुरितीन्द्रधनुः । गां धयन्तीं परस्मै नाचक्षीत । धयन्तीमित्युक्ते धीयमानां नाचक्षीत । तस्याहि प्रतिषेधः स्मृत्यन्तरेऽपि । उर्वरायामनन्तर्हितायां भूमावुत्सर्पंस्तिष्ठन्नमूत्रपुरीषे कुर्यात् । उर्वरा सस्यवती भूमिः तस्यां मूत्रपुरीषे न कुर्यात् । अनन्तर्हितायां च तृणादिना मूत्रपुरीषे न कुर्यात् । उत्सर्पंस्तिष्ठंश्च न कुर्यादिति वर्तते । स्वयं प्रशीर्णेन काष्ठेन गुदं प्रमृजीत । विकृतं वासो नाच्छादयीत । विकृतं नील्यादिना न कषायप्रतिषेधः । कषायरक्तन्तु प्रशस्यत एवेति । दृढव्रतो वधत्रः स्यात् । यद्व्रतमङ्गीकृतं मयैतत्कर्तव्यमिति तत्र दृढव्रतः स्यान्न चञ्चलः । सर्वेषां मित्रमिव संव्यवहरेत् । मैत्रो हि ब्राह्मण उच्यते ॥ * ॥

जयरामः ॥ स्नातस्य यमान्वक्ष्याम इत्यधिकारसूत्रम् । तेषु स्नातकोऽधिक्रियते । कामादिच्छातः । इतरः स्नानसम्बन्धशून्यः शूद्रोऽपि । तानाह । नृत्येति काममिच्छया ब्राह्मणो गीतं कुर्याद्गच्छेच्च कर्मण्युपयोगाद्गीतस्य । तद्यथा । ब्राह्मणोऽन्यो गायति राजन्योऽन्य इति । गायति वैव गीते वा रमत इति ह्यपरम् वचनमस्ति । अपरग्रहणात् पूर्वं न्यायप्राप्तमिति गम्यते । क्षेमे सति नक्तं रात्रौ । अक्षेमे पुनर्नक्तमपि गच्छेत् । नच धावेत् । क्षेम इतिवर्तते । अक्षेमे तु धावेदपि । उदपानशब्देन कूपोऽभिधीयते । वृक्षारोहणम्प्रसिद्धम् । फलानां प्रपतनम् त्रोटनम् । सन्धिः कुद्वारं तत्र सर्पणङ्गमनम् । विवृतस्नानन्नग्नस्नानम् । विषमलङ्घनम् प्रसिद्धमेव । शुक्तवदनमश्लीलभाषणम् । सन्ध्यादित्यप्रेक्षणम् प्रसिद्धमेव । भिक्षणं सिद्धान्नस्यैव । तस्य च विप्रत्वेनावश्यकत्वात् । तत्प्रतिषेधे श्रुतिमाह । नहवैस्नात्वेति यतः स्नात्वा भिक्षाञ्जयति अपाकरोति । अपहवैइति निपातसमुदायो निश्चयार्थः । अत्र यो दृष्टार्थविषयः प्रतिषेधस्तस्य दृष्टार्थत्वादेवाकरणे प्राप्ते प्रतिषेधसामर्थ्याददृष्टार्थताऽप्यनुमीयते । अप्रावृतश्छत्रादिना वर्षति व्रजेदयम्मे वज्र इति मन्त्रञ्जपेत् । अस्यार्थः तत्र प्रजापतिर्जगती वज्रो वृष्टिजपे० । अयं रविरश्मिसंस्कृतो जलकणरूपो वज्रो मे मम पाप्मानम् अपहनत् अपहन्तु । अयञ्चातपवृष्टिविषय इत्येके । आत्मानं स्वम् । अजातलोम्नीम् समयेऽप्यनुत्पन्नलोम्नीम् । विपुंसीम् कूर्चादिना पुरुषाकृतिं स्त्रियम् । षण्ढञ्च प्रसिद्धमेव । एतानि नोपहसेन्नाभिगच्छेत् । उपहासशब्देनाभिगमनमुच्यते । गर्भिणीं

गुर्वी विजन्येति ब्रूयान्नगर्भिणीमिति । एवमुत्तरत्रापि । गां धयन्तीं स्वयमेव वत्सेन वा धीयमानाम् । जलादि पिबन्तीं वा । उर्वरा सस्यवती भूमिस्तस्याम् तथाऽनन्तरितायान्तृणादिना । तथोत्सर्पन् तिष्ठँश्च मूत्रपुरीषे न कुर्यादिति सर्वत्र सम्बध्यते । मूत्रपुरीषसन्निधानाद्गुदस्यैव मार्जनम् । विकृतञ्च नील्यादिना । न तु कषायादिना । तत्तु प्रशस्यते । दृढं व्रतं सङ्कल्पो यस्य स दृढव्रतः । तथा वधात् घातादात्मानम्परं वा त्रायते स वधत्रः स्यात् । तथा सर्वेषाम्मित्रमिव विश्वासास्पदञ्च स्यात् । मैत्रो हि ब्राह्मण उच्यते । एते च निषेधा विवाहावधिकाः । अन्येषाम्पृथग्वक्ष्यमाणत्वात् ॥ १ ॥　॥ * ॥　॥ * ॥　॥ * ॥

**हरिहरः ॥ स्नातस्य यमान्वक्ष्यामः ॥** स्नातस्य ब्रह्मचर्यात् समावृत्तस्य द्विजातेः यमान् व्रतानि वक्ष्यामः कथयिष्यामहे ॥ **कामादितरः ॥** कामात् इच्छया इतरः द्विजातेरन्यः शूद्र इति यावत् यमेषु अस्नातकोऽपि अधिक्रियते ॥ **नृत्यगीतवादित्राणि न कुर्यान्न च गच्छेत् ॥** नृत्यं लास्यादिभेदभिन्नं । गीतं षड्जादिस्वरैर्ध्रुवादिरूपकविशेषैर्निबद्धम् । वादित्रं तन्त्र्यादिभेदेन चतुर्विधम् । नृत्यञ्च गीतञ्च वादित्रञ्च नृत्यगीतवादित्राणि तानि स्वयं न कुर्यात् न च गच्छेत् । नृत्यादीनि अन्यैरपि क्रियमाणानि न गच्छेत् द्रष्टुं श्रोतुम् चकारः करोतिर्गच्छतिक्रियासमुच्चयार्थः ॥ **कामन्तु गीतं गायति वैव गीते वा रमत इति श्रुतेर्हि ॥** अत्र गीते प्रतिप्रसवमाह । तु पुनः कामं इच्छया गीतं गानं स्वयं कुर्यात् परैः क्रियमाणं च गच्छेच्छ्रोतुम् । कुतः हि यस्मात् गायति स्वयं गानं करोति गीते वा अन्यैः क्रियमाणे गाने वा रमते रतिं प्राप्नोति इति श्रुतिर्वेदवचनम् । कः यः सर्वः कृत्स्नो मन्यते आत्मानं सुखिनं सम्पूर्णं मन्यते स स्वयं गायति गीतञ्च शृणोति ॥ **अपरम् ॥** अपरमपि गायेत गीतं च शृणुयात् । इत्येतदर्थज्ञापकं वेदे लिङ्गमस्ति । यथाऽश्वमेधे श्रूयते दिवा ब्राह्मणो गायति नक्तꣳराजन्य इति । अनेन ब्राह्मणराजन्ययोः स्वयंगानेऽधिकारोऽस्तीति ज्ञायते । तथा तौ च अश्वमेधयाजिनं यजमानं राजन्यं श्रावयितुं गायतः तेन श्रवणेऽप्यधिकारो गम्यते । **क्षेमे नक्तं ग्रामान्तरं न गच्छेत् ॥** क्षेमे सति आपदभावे सति नक्तं रात्रौ ग्रामान्तरं अन्यद्ग्रामं न गच्छेत् अक्षेमे तु गच्छेत् ॥ **न च धावेत् ॥** क्षेमे सतीत्यनुषज्यते नच धावेत् शीघ्रं न गच्छेत् ॥ **उदपानावेक्षणवृक्षारोहणफलप्रपतनसन्धिसर्पणविवृतस्नानविषमलङ्घनशुक्तवदनसन्ध्यादित्यप्रेक्षणभिक्षणानि न कुर्यात् ॥** उदपा-

नस्य कूपस्यावेक्षणं उपरि स्थित्वा अधोमुखीभूयावलोकनं। वृक्षस्य आरोहणं उपरि गमनं। फलानां आम्रादीनां प्रपतनं त्रोटनं। सन्धौ सन्ध्यासमये सर्पणम् अध्वगमनम् सन्धिना अपमार्गेण वा सर्पणम्। विवृतेन नग्नेन स्नानं। विषमस्य पर्वतगर्तादिर्लङ्घन-मतिक्रमणम्। शुक्तस्य अश्लीलस्य वदनं भाषणम्। अश्लीलन्तु त्रिविधं लज्जाकरं दुःखकरम् अमङ्गलसूचकं च। सन्ध्यासु आदित्यस्य सूर्यमण्डलस्य रागतः प्रेक्षणं दर्शनम् उपरक्तस्य वारिप्रतिबिम्बितस्य च। नोपरक्तं नवारिस्थमिति मनुस्मृतेः। नेक्षेतादित्यमुद्यन्तं नास्तं यान्तं कदाचन। नोपसृष्टं न वारिस्थं न मध्यं नभसो गतमिति स्मृतेः। भिक्षणं भिक्षाचर्या। एतानि उदपानावेक्षणादीनि भिक्षणान्तानि वर्जयेत्॥ न ह वै स्नात्वा भिक्षेताप ह वै स्नात्वा भिक्षां जयतीति श्रुतेः॥ भिक्षणप्रतिषेधे श्रुतिं प्रमाणत्वेनावतारयति। स्नात्वा समावर्त्य न भिक्षेत यतः स्नात्वा भिक्षां अपजयति अपाकरोति। ह वै इति निपातसमुदायो निश्चयार्थ इति वेदवचनात्॥ वर्षत्यप्रावृतो व्रजेदयम्मे वज्रः पाप्मानमपहनदिति॥ देवे वर्षति अप्रावृतः अनाच्छादितो व्रजेत् गच्छेत् अयम्मे वज्र इत्यनेन मन्त्रेण॥ अप्स्वात्मानं नावेक्षेत॥ अप्सु जले आत्मानं स्वमुखं नावेक्षेत न पश्येत्॥ अजातलोम्नीं विपुꣳसीꣳ षण्ढं च नोपहसेत्॥ समयेऽपि न जातानि लोमानि यस्याः सा अजातलोम्नी ताम् अजातलोम्नीं नोपहसेत् नच गच्छेत् विपुंसीं च पुरुषाकारां स्त्रियं कूर्चादिविकारेण नोपहसेदित्यनुवर्तते। षण्ढं नपुंसकं नोपहसेदित्यनुवर्तते॥ गर्भिणीं विजन्येति ब्रूयात्॥ गर्भिणीं अन्तर्वत्नीं विजन्या इति नाम ब्रूयात् वदेत्॥ सकुलमिति नकुलं भगालमिति कपालं मणिधनुरितीन्द्रधनुर्गां धयन्तीं परस्मै नाचक्षीत॥ सकुलमिति नकुलं ब्रूयात्। कपालं कर्परं भगालमिति ब्रूयात्। इन्द्रधनुः मणिधनुरिति ब्रूयात्। परस्य गां सुरभिं धयन्तीं वत्सं पाययन्तीं परस्मै अन्यस्मै स्वामिने नाचक्षीत न कथयेत्॥ उर्वरायामनन्तर्हितायां भूमावुत्सꣳर्पꣳस्तिष्ठन्न मूत्रपुरीषे कुर्यात्॥ उर्वरायां सस्यवत्यां भूमौ पृथिव्यां केवलायां तृणैरनन्तर्हितायां मूत्रपुरीषे मूत्रस्य पुरीषस्य वा उत्सर्गं न कुर्यात्। किञ्च तिष्ठन् ऊर्ध्वः न कुर्यात्। तथा उत्सर्पन् उत्प्लवमानस्सन् न कुर्यात्॥ स्वयं प्रशीर्णेन काष्ठेन गुदं प्रमृजीत॥ स्वयमात्मनः प्रयत्नं विना प्रशीर्णेन स्वयंछिन्नेन पतितेन काष्ठेन दारुशकलेन अयज्ञियेन प्रमृजीत प्रोञ्छेत्। पुरीषोत्सर्गसन्निधानात् गुदमित्यध्याहारः॥ विकृतं वासो नाच्छा-

दधीत ॥ विकृतं मञ्जिष्ठादिरागेण विकारमापादितं वासो वस्त्रं न परिदधीत । नील्यादिना रक्तं विकृतं निषिध्यते कषायरक्तं तु न निषिध्यते किन्तु प्रशस्यत इति भाष्यकारः ॥ दृढव्रतोवधत्रः स्यात् सर्वत आत्मानङ्गोपायेत् सर्वेषां मित्रमिव ॥ दृढं स्थिरं व्रतं प्रारब्धं कर्म यस्य स दृढव्रतः स्यात् भवेत् । किञ्च वधात् घातात् त्रायते रक्षतीति वधत्रः स्यात् । किञ्च सर्वेषां स्वेषां परेषां च मित्रमिव सखेव सुहृदिव हितकारी स्यादित्यर्थः । मैत्रो ब्राह्मण उच्यते इति स्मरणात् । अत्र यो दृष्टार्थविषयः प्रतिषेधः तत्र दृष्टार्थादेव निवृत्तिप्राप्तौ प्रतिषेधसामर्थ्याददृष्टमप्यनुमीयते । अतएव प्रायश्चित्तस्मरणम् । स्नातकव्रतलोपे तु एकरात्रमभोजनमिति स्मरणात् ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

गदाधरः ॥ स्नातस्य यमान्वक्ष्यामः ॥ स्नातस्य ब्रह्मचर्यात्समावृत्तस्य त्रैवर्णिकस्य यमान् नियमान् वक्ष्यामः । अधिकारसूत्रमेतत् । तेषु स्नातकोऽधिक्रियते ॥ कामादितरः ॥ कामादिच्छातः इतरः स्नानसम्बन्धशून्यः शूद्रोऽभिधीयते । स हि स्नातको न भवति । एवं सतीच्छया शूद्रस्यापि यमेष्वधिकारो भवति । तानाह । नृत्यगीतवादित्राणि न कुर्यान्न च गच्छेत् ॥ नृत्यं च गीतं च वादित्रं च नृत्यगीतवादित्राणि तानि स्वयं न कुर्यात् नच गच्छेत् नृत्यादीनि अन्यैः क्रियमाणानि द्रष्टुं श्रोतुं वा न व्रजेत् ॥ कामं तु गीतम् ॥ तु पुनः काममिच्छया गीतं गानं स्वयं कुर्यात् । अन्यैः क्रियमाणं श्रोतुं गच्छेच्च । कर्मण्यौपयिकत्वाद्गीतस्य । दृश्यते हि अश्वमेधे गानम् । ब्राह्मणोऽन्यो गायति राजन्योऽन्य इति । न चाक्रियमाणं शक्यते गातुमिति ॥ गायति वैवगीते वा रमत इति ह्यपरम् ॥ अपरम् उपासम्भरणकाण्डे वचनमस्ति । तस्माद्धैतद्यः सर्वः कृत्स्नो मन्यते गायति वैव गीते वा रमत इति । अपरग्रहणाच्च पूर्वं न्यायप्राप्तमभिहितम् । एवंच यत्रापि पुनर्वचनेन देवताग्रे नृत्यगीतादिकं विहितं तत्रापि ब्राह्मणादिभिः कार्यमेव । विहिते निषेधाप्रवृत्तेः ॥ क्षेमे नक्तं ग्रामान्तरं न गच्छेत् ॥ क्षेमे आपदभावे सति नक्तं रात्रौ ग्रामान्तरमन्यद्ग्रामं न गच्छेत् । अक्षेमेतु नक्तमपि गच्छेत् ॥ नच धावेत् ॥ क्षेम इत्यनुवर्तते । क्षेमे सति नच धावेत् शीघ्रं न गच्छेत् ॥ उदपानावेक्षणवृक्षारोहणफलप्रपतनसन्धिसर्पणविवृतस्नानविषमलङ्घनशुक्तवदनसन्ध्यादित्यप्रेक्षणभिक्षणानि न कुर्यात् ॥ उदपानस्य कूपस्यावेक्षणम् उपरिस्थित्वा अधोमुखीभूयावलोकनम् । आम्रादिवृक्षस्यारोहणम् । उपरि गमनम् ।

फलानामाम्रादीनां प्रपतनं त्रोटनम् । सन्धौ सन्ध्यासमये सर्पणमध्वगमनम् । सन्धिः कुद्वारं वा तत्र सर्पणं सर्पगर्तादिलक्षणम् । विवृतेन नग्नेन स्नानम् । विषमस्य पर्वतगर्त्तादेर्लङ्घनमतिक्रमणम् । शुक्तवदनमश्लीलभाषणम् । सन्ध्यादित्यप्रेक्षणम् सन्ध्यासु सूर्यावेक्षणम् । नेक्षेतादित्यमुद्यन्तं नास्तं यान्तं कदाचन । नोपसृष्टं न वारिस्थं न मध्यं नभसो गतमिति स्मृतेः । भिक्षणं सिद्धान्नस्यैव । उदपानावेक्षणादीनि वर्जयेत् । तत्र भैक्षणप्रतिषेधे प्रत्यक्षमेव वचनमस्तीत्याह ॥ न ह वै स्नात्वा भिक्षेतापहवै स्नात्वा भिक्षां जयतीति श्रुतेः ॥ स्नात्वा समावर्त्य न भिक्षेत । यतः स्नात्वा भिक्षां अपजयति अपाकरोति । ह वै इति निपातसमुदायो निश्चयार्थः । अत्र यो दृष्टार्थविषयः प्रतिषेधस्तत्र दृष्टार्थत्वादेवाकरणे प्राप्ते प्रतिषेधविधानसामर्थ्याददृष्टार्थताऽप्यनुमीयते ॥ वर्षत्यप्रावृतो व्रजेदयं मे वज्रः पाप्मानमपहनदिति ॥ पर्जन्ये वर्षति अप्रावृत अनाच्छादित एव व्रजेत् गच्छेत् अयम्मे वज्र इति मन्त्रेण । मन्त्रार्थः । जलकणरूपो वज्रो मम पाप्मानम् अपहनत् अपहन्तु ॥ अप्स्वात्मानं नावेक्षेत ॥ अप्सु जले आत्मानं स्वशरीरं न पश्येत् ॥ अजातलोम्नीं विपुंसीं षण्ढं च नोपहसेत् ॥ समयेऽप्यनुत्पन्नलोम्नीं अजातानि लोमानि यस्याः सेयमजातलोम्नी ताम् । विपुंसीं कूर्चादिना पुरुषाकृतिं स्त्रियम् । षण्ढः प्रसिद्ध एव । एतानि नोपहसेत् नाभिगच्छेत् उपहासशब्देनाभिगमनमुच्यते ॥ गर्भिणीं विजन्येति ब्रूयात्सकुलमिति नकुलं भगालमिति कपालं मणिधनुरितीन्द्रधनुर्गां धयन्तीं परस्मै नाचक्षीत ॥ गर्भिणीं विजन्येति ब्रूयात् । गर्भिणीं गुर्वीं विजन्येति पर्यायशब्देन वदेत् न गर्भिणीमिति । उत्तरत्राप्येवमेव योज्यम् । सकुलमिति नकुलम् । सकुलमिति नकुलं ब्रूयात् । भगालमिति कपालम् । भगालमिति कपालं कर्परं ब्रूयात् । मणिधनुरितीन्द्रधनुः । मणिधनुरिति इन्द्रधनुर्ब्रूयात् । गां धयन्तीं परस्मै नाचक्षीत । परस्य गां सुरभिं धयन्तीं वत्सं पाययन्तीं अन्यस्मै परस्मै स्वामिने वा नाचक्षीत न कथयेत् ॥ उर्वरायामनन्तर्हितायां भूमावुत्सर्पँस्तिष्ठन्न मूत्रपुरीषे कुर्यात् ॥ उर्वरायां सस्यवत्यां भूमौ तृणैरनन्तर्हितायां केवलायां च मूत्रस्य पुरीषस्य वा उत्सर्गं न कुर्यात् । किञ्च । तिष्ठन् ऊर्ध्वस्सन् न कुर्यात् । तथोत्सर्पन् उत्प्लवमानस्सन्नकुर्यात् ॥ स्वयं प्रशीर्णेन काष्ठेन गुदं प्रमृजीत ॥ आत्मनः प्रयत्नमन्तरेण स्वयमेव प्रशीर्णेन छिन्नेन दारुशकलेन गुदं प्रमृजीत प्रोञ्छेत् परिमार्जयेत् । ततः शौचं कुर्यात् ॥ विकृतं वासो नाच्छाद-

वनाः श्राद्धे नियोज्याः । एतेषान्नियोजनेन पितृणामक्षय्यतृप्तिरित्यर्थः । मन्त्राध्यायिनः संहिताध्यायिनः । पूता आचरणेन पूताः । षडङ्गवित् शिक्षाकल्पादीनामर्थतो ग्रन्थतश्च वेत्ता । ज्येष्ठसाम्नः सन्ततगाता ज्येष्ठसामगः । अथ ज्येष्ठसाम छन्दोगानां व्रतं साम च तद्योगाज्ज्येष्ठसामगः । गार्हपत्याहवनीयदक्षिणाग्निसभ्यावसथ्याग्निमान् पञ्चाग्निः । त्रिणाचिकेतः यजुर्वेदभागस्तद्व्रतञ्च तदुभयं योऽधीते यश्च करोति सोऽपि तद्योगात्त्रिणाचिकेतः । त्रिमधुः ऋग्वेदैकदेशः तदधीते तद्व्रतञ्चरति यः स त्रिमधुः ॥ त्रिसुपर्णी अध्वर्युवेदभागस्यार्थतो ग्रन्थस्याध्येता । द्रोणपाठको धर्मशास्त्रपाठकः । ब्राह्मोढापुत्रो ब्राह्मविवाहपरिणीतापुत्रः । वागीश्वरो विद्वान् ॥ अभावेऽप्येकं वेदविदम्पङ्क्तिमूर्द्धनि नियुञ्ज्यादासहस्रात्पङ्क्तिम्पुनातीति वचनात् ॥

इति नवकण्डिकागदाधरभाष्ये अष्टमी कण्डिका ॥ ॥ ८ ॥ ॥ * ॥

मूलम् ॥ अथ काम्यानि भवन्ति स्त्रियोऽप्रतिरूपाः प्रतिपदि द्वितीयायाᳬं स्त्रीजन्म श्वास्तृतीयायाञ्चतुर्थ्यां क्षुद्रपशवः पुत्राः पञ्चम्यां द्यूतर्द्धिः षष्ठ्यां कृषिः सप्तम्यां वाणिज्यमष्टम्यामेकशफं नवम्यां दशम्यां गावः परिचारका एकादश्यां धनधान्यानि द्वादश्यां कुप्यᳬं हिरण्यं ज्ञातिश्रैष्ठ्यञ्च त्रयोदश्यां युवानस्तत्र म्रियन्ते शस्त्रहतस्य चतुर्दश्याममावास्यायाᳬं सर्वमित्यमावास्यायाᳬं सर्वमिति ॥ ॥ ९ ॥ ॥ * ॥

गदाधरः ॥ अथ काम्यानि भवन्ति स्त्रियोऽप्रतिरूपाः प्रतिपदि द्वितीयायाᳬं स्त्रीजन्म श्वास्तृतीयायां चतुर्थ्यां क्षुद्रपशवः पुत्राः पञ्चम्यां द्यूतर्द्धिः षष्ठ्यां कृषिः सप्तम्यां वाणिज्यमष्टम्यामेकशफं नवम्यान्दशम्याङ्गावः परिचारका एकादश्यां धनधान्यानि द्वादश्यां कुप्यᳬं हिरण्यं ज्ञातिश्रैष्ठ्यं च त्रयोदश्यां युवानस्तत्र म्रियन्ते शस्त्रहतस्य चतुर्दश्याममावास्यायाᳬं सर्वममावास्यायाᳬं सर्वमिति ॥ प्रतिपदादयश्च कृष्णपक्षजाः । स्त्रीजन्म कन्योदयः । क्षुद्रपशव अजादयः । कृषिः कृषिफलम् । वाणिज्यं वाणिज्यफलम् । परिचारका दासादयः । कुप्यं सुवर्णरूप्यव्यतिरिक्तन्ताम्रादि । यूनां मृतानां त्रयोदश्यां श्राद्धन्देयम् । शस्त्रहतस्येति जलादिद्वात्रिंशद्दुर्मरणेन मृतानामुपलक्षणम् । प्रतिपदादितिथिष्वभिहितानि यानि फलानि तेषु स्वीयमनसोऽभीष्टान्सर्वान्कामानमावास्यायां श्राद्धदः

प्राप्नोति। अत्र यद्यपि सर्वकामप्राप्तिरविशेषेण कथिता, तथापि न युगपत्सर्वकामनाप्राप्तिः, अपितु अमावास्यायामनुष्ठितेन श्राद्धेनैकेनैककामनाप्राप्तिः । एवममावास्यान्तरानुष्ठितेनान्येन श्राद्धेनान्यः काम इति ॥ इति श्री त्रिरग्निचित्सम्राट्स्थपतिश्रीमहायाज्ञिकवामनात्मजदीक्षितगदाधरकृते कातीयश्राद्धसूत्रभाष्ये नवमी कण्डिका ॥ ९ ॥ ॥ * ॥ ॥ * ॥

## ॥ भोजनसूत्रम् ॥

मूलम् ॥ वन्दे श्रीदक्षिणामूर्त्तिं सच्चिदानन्दविग्रहम् ॥ सर्वार्थानाम्प्रदातारं शिवादेहार्धधारिणम् ॥ १ ॥ अथातः श्रुतिस्मृतीरनुसृत्य भोजनविधिं व्याख्यास्यामः ॥ आचान्तो धृतोत्तरीयवस्त्रो धृतश्रीखण्डगन्धपुण्ड्रो भोजनशालामागत्य गोमयेनोपलिप्य शुचौ देशे विहितपीठाधिष्ठितो नित्यम्प्राङ्मुखो न दक्षिणामुखो न प्रत्यङ्मुखो न विदिङ्मुखः। श्रीकामश्चेत्प्रत्यङ्मुखः सत्यकामश्चेदुदङ्मुखो यशस्कामश्चेद्दक्षिणामुखो जीवन्मातृकवर्जं हस्तपादास्येषु पञ्चस्वार्द्रो नीवारचूर्णैर्गोमृदा भस्मनोदकेन वा मण्डलङ् कुर्यात् । चतुष्कोणं ब्राह्मणस्य त्रिकोणं क्षत्रियस्य मण्डलाकृति वैश्यस्याभ्युक्षणꣳ शूद्रस्य, यथा चक्रायुधो विष्णुस्त्रैलोक्यं परिरक्षति । एवम्मण्डलभस्मैतत्सर्वभूतानि रक्षत्विति तत्र भूमौ निहितपात्रेऽन्ने परिविष्टे पितुन्नुस्तोषमित्यन्नꣳ स्तुत्वा मानस्तोके नमोवः किरिकेभ्यो नमः शम्भवायेत्यभिमन्त्र्य प्रोक्षयेत् , सत्यन्त्वर्त्तेन परिषिञ्चामीति प्रातर्ऋतन्त्वा सत्येन परिषिञ्चामीति सायम् । तेजोऽसि शुक्रमस्यमृतमसीति यजुषाऽन्नमभिमृश्याग्निरस्मीत्यात्मानमग्निन्ध्यात्वा भूपतये भुवनपतये भूतानाम्पतयइति चित्राय चित्रगुप्ताय सर्वेभ्यो भूतेभ्यो नम इति दिवा प्रणवादिकैः

स्वाहानमोन्तैर्मन्त्रैः प्रतिमन्त्रं बलीन् हरेत्, अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः ॥ त्वम्ब्रह्म त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारस्त्वं विष्णोः परमम्पदम् । अमृतोपस्तरणमसि स्वाहेति विष्णुमन्त्रमभिध्यायन्नाचम्यान्नममृतं ध्यायन् मौनी हस्तचापल्यादिरहितो मुखे पञ्च प्राणाहुतीर्जुहोति ॥ १ ॥ प्राणाय स्वाहा ऽपानाय स्वाहा व्यानाय स्वाहा समानाय स्वाहोदानाय स्वाहेति क्रमं याज्ञवल्क्योऽमन्यत उदानाय स्वाहेति शौनकबौधायनौ। याज्ञवल्क्योदितक्रमो वाजसनेयिनाम्। दन्तैर्नोपस्पृशेत् । जिह्वया ग्रसेदङ्गुष्ठप्रदेशिनीमध्यमाभिः प्रथमामङ्गुष्ठमध्यमानामिकाभिर्द्वितीयामङ्गुष्ठानामिकाकनिष्ठिकाभिस्तृतीयां कनिष्ठिकातर्जन्यङ्गुष्ठैश्चतुर्थीं सर्वाभिरङ्गुलीभिः साङ्गुष्ठाभिः पञ्चमीम्। अङ्गुष्ठानामिकाग्राभ्यान्नैता आहुतय इति हारीतव्याख्यातारः । सर्वाभिरेता इति बौधायनः । मौनन्त्यक्त्वा प्राग्द्रवरूपमश्नीयान्मध्ये कठिनमन्ते पुनर्द्रवाशी स्यान्मधुरम्पूर्वं लवणाम्लौ मध्ये कटुतिक्तादिकान् पश्चाद्यथासुखम्भुञ्जीत भुञ्जानो वामहस्तेनान्नन्न स्पृशेन्न पादौ न शिरो न वस्ति न पराभोजनं स्पृशेदेवं यथारुचि भुक्त्वा भुक्तशेषमन्नमादाय "मद्भुक्तोच्छिष्टशेषं ये भुञ्जते पितरोऽधमाः । तेषामन्नं मया दत्तमक्षय्यमुपतिष्ठतु, इति पितृतीर्थेन दत्वाऽमृतापिधानमसि स्वाहेति हस्तगृहीतानामपामर्धं पीत्वाऽर्धम्भूमौ निक्षिपेत्। रौरवे पूयनिलये पद्मार्बुदनिवासिनाम् । अर्थिनां सर्वभूतानामक्षय्यमुपतिष्ठत्विति, तस्माद्देशादपसृत्य गण्डूषशलाकादिभिस्तर्जनीवर्जमास्यं शोधयेत्॥ २॥ न भार्यादर्शनेऽश्नीयान्न भार्यया सह न सन्ध्ययोर्न मध्याह्ने नार्धरात्रे नायज्ञोपवीती नाऽऽर्द्रशिरा नार्द्रवासा

नैकवासा न शयानो न ताम्रभाजने न भिन्ने न राजतसौव-
र्णशङ्खस्फाटिककांस्यभाजनवर्जं न लोहे न मृन्मये न सन्धि-
संस्थिते न भुवि न पाणौ न सर्वभोजी स्यात्किञ्चिद्भोज्यं
परित्यजेदन्यत्र घृतपायसदधिसक्तुपललमधुभ्यः, साध्वाचा-
न्तो दक्षिणपादाङ्गुष्ठे पाणिं निःस्रावयेदङ्गुष्ठमात्रः पुरुषो
अङ्गुष्ठञ्च समाश्रितः । ईशः सर्वस्य जगतः प्रभुः प्रीणातु
विश्वभुगिति श्वात्राः पीता इति नाभिमालभेत, अमृता
इत्यतः प्रागगस्त्यं वैनतेयञ्च शनिञ्च वडवानलम् ॥ आहार-
परिणामार्थं स्मरेद्भीमञ्च पञ्चममित्युदरमालभ्य "शर्यातिञ्च
सुकन्याञ्च च्यवनं शक्रमश्विनौ । भोजनान्ते स्मरेन्नित्यं तस्य
चक्षुर्न हीयते" इति स्मृत्वा मुखशुद्धिङ्कुर्यान्नमो भगवते
वाजसनेयाय याज्ञवल्क्याय नमो भगवते वाजसनेयाय
याज्ञवल्क्याय ॥ ॥ ३ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

॥ अथ श्री६योगीश्वरद्वादशनामानि ॥

वन्देऽहम्मङ्गलात्मानम्भास्वन्तं वेदविग्रहम् ॥
याज्ञवल्क्यम्मुनिश्रेष्ठञ्जिष्णुं हरिहरप्रभम् ॥ १ ॥
जितेन्द्रियञ्जितक्रोधं सदा ध्यानपरायणम् ॥
आनन्दनिलयं वन्दे योगानन्दम्मुनीश्वरम् ॥ २ ॥
एवं द्वादश नामानि त्रिसन्ध्यं यः पठेन्नरः ॥
योगीश्वरप्रसादेन विद्यावान्धनवान् भवेत् ॥ ३ ॥

# शुद्धिपत्रम् ।

| अशुद्धस्य | शोधनम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| यज्ञीय | यज्ञिय | ६ | २१ |
| मात्रस्तत्र | मात्रं तत्र | ८ | १८ |
| यद्धृक्तो | यद्धृक्तो | १० | ८ |
| जनीयङ्क | जनीङ्क | ,, | २० |
| प्रवित्राभ्या | पवित्राभ्या | ११ | २० |
| संम्राट् | सम्राट् | १२ | ६ |
| काण्डिका | कण्डिका | ,, | १० |
| रूत्ते | रूत्तें | २७ | १६ |
| परित्याजा | परित्याज्या | ३० | १० |
| पृथीवी | पृथिवी | ३८ | १५ |
| पश्चातात् | पश्चात्तात् | ३६ | १६ |
| यजमानम् | यजमानः | ,, | २१ |
| बुध्या, | बुद्धा | ४१ | ४ |
| स्वतीति, | स्वस्तीति | ४६ | १७ |
| विशेषं | विशेषः | ४६ | ५ |
| वृत्यर्थं | वृत्त्यर्थं | ५२ | ५ |
| मुक्त्वा | रुक्त्वा | ५३ | २७ |
| कारयितत्वं | कारयितृत्वं | ६० | ७ |
| अथाधिकरणे | आद्याधिकरणे | ,, | २५ |
| पुत्रादिसुखं | पुत्रादिसुख- | ६६ | १४ |
| पुरस्थिता | पुरःस्थिता | ,, | १५ |
| इहापुत्र | इहामुत्र | १२८ | ११ |
| वृद्धा | वृद्धाः | १३० | ४ |
| ब्रह्मचर्यौ | ब्रह्मचर्यौ | १३१ | १७ |
| यान्यन्तरा | यान्यान्तरा | ,, | २४ |
| निवृत्यर्थम् | निवृत्त्यर्थम् | १३२ | २६ |
| परीद्य | परीद्यः | १३४ | ३ |
| रुदाहत | रुदाहतः | ,, | ६ |
| ततोऽर्घ्यं: | ततोऽर्घ्यः | १४० | १२ |
| चित्यै | चित्त्यै | १४३ | १ |

| अशुद्धस्य | शोधनम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| सिध्यर्थं | सिद्ध्यर्थं | १४८ | ५ |
| शिरस्थ | शिरःस्थ | १५१ | ५ |
| चेति | वेति | १६७ | २८ |
| मन्त्रावृत्या | मन्त्रावृत्त्या | १७७ | २४ |
| ,, | ,, | ,, | २६ |
| तृचेन | त्र्यृचेन | १७६ | ११ |
| रभ्युक्ति | रभ्युक्ति | २०६ | १६ |
| ब्राह्मणा | ब्राह्मणा | २१२ | ६ |
| त्वमीडा | त्वमिडा | ,, | २५ |
| बाह्मणे | ब्राह्मणे | २१६ | २१ |
| नाड्यां | नाड्या | २२० | ३ |
| रात्रोसो | रात्रासो | २६० | २७ |
| सामर्थ्याद्वेधा, | सामर्थ्याद्द्वेधा | २७६ | २६ |
| प्रसिध्या | प्रसिद्धा | २६१ | २४ |
| मन्त्रेण | तन्त्रेण | ३१४ | १८ |
| भक्तिभ्या | भक्तीभ्या | ३४१ | १२ |
| ,, | ,, | ,, | १६ |
| पक्तिको | पाक्तिको | ३७७ | १२ |
| हरित | हारीत | ३६८ | १७ |
| अकृष | अकृष् | ४०१ | २ |
| प्रजापरिति | प्रजापतिरिति | ४२२ | १० |
| गृह्यम् | गृह्म् | ४२४ | २० |
| विलिखते | विलिखिते | ४३० | २६ |
| आगात्स्वाहा, | आगाःस्वाहा | ४६१ | ३ |
| ततच्छिनत्ति, | ततश्छिनत्ति | ४६४ | ८ |
| वर्त्तत | वर्त्तते | ४७३ | १५ |
| भिमुखं | भिमुखं | ,, | ३० |
| निवृत्यर्थः | निवृत्त्यर्थः | ४६५ | २६ |
| पाऽभ्यव | पोऽभ्यव | ५०४ | २० |
| प्रतिसि | प्रसि | ,, | २५ |

| अशुद्धस्य | शोधनम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| उत्थानात् | ओत्थानात् | ५१३ | २४ |
| पात्रयोभदेन, | पात्रयोर्भेदेन | ५१६ | २२ |
| वृत्ति | वृत्त | ,, | २८ |
| यदुक्तम्प्रता, | यदुक्तम्प्रेता | ५२८ | २६ |
| समाधको | ससाधको | ५३४ | १२ |
| द्रष्ट्र | द्रष्टृ | ५५० | ७ |
| पित्र्यच | पित्र्येच | ५८६ | १३ |
| पितभ्यः | पितृभ्यः | ६१२ | १५ |
| काष्ठै | काष्ठै | ६१७ | १६ |
| लोमं | लोम | ,, | २० |
| पर्श्वयोः | पार्श्वयोः | ६१८ | २ |
| अनुपलेपन, | अनुलेपन | ६२० | १ |
| देकाशे | देकादशे | ६२४ | २५ |
| प्रेतपत्रा | प्रेतपात्र | ६२७, | १३ |
| पिण्डत्रत्रये, | पिण्डत्रये | ,, | २१ |